॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना



सूचना—द्वितीयतृतीयतुरीयाङ्काङ्किताः प्रबन्धास्तावदस्मदीय विद्यागणपतिसभायामुपन्यस्ता इति ॥

## सम्पादकीयसमितिः
(अभिनवा)



---

## सूचना.

"मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्धः आनुष्टुभश्लोकरूपेण संगृहीतः सर्वसिद्धान्तसारसंग्रहरूपः परस्सहस्रविषयविभक्तः महामहोपाध्याय पण्डितरत्नं इत्याद्यनेक विरुदाङ्कितैः श्रीमद्भिः लक्ष्मीपुरं श्रीनिवासाचार्यैः प्रणीतः मुद्रितः प्रकाशितश्चास्ति । मूल्यमस्य (६) षट् रूपकाणि. प्रापणभृतिः पृथगेव.

उपलब्धिस्थानं—ग्रन्थकर्ता. मैसूरु.

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकल्पितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।<br>
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥<br>
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।<br>
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)

२. विद्यार्थिनां पुनःएकरूप्यकम्. प्रापणव्यय पृथक्कृतम्.

३. विभिन्नदेशे सपादरूप्यद्वयम् (*3 s.*) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

**एच्. योगनरसिंहार्यः,**

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

संपुट-५] जनवरि १९२९. [सञ्चिका-१

इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्किवाहन दशाकल्किन् इति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्तु भुवनं पुण्यौघपण्यापणाः ॥

## वेणीसंहारम्

नेदमविदितं प्रायोऽखिलानामपि सुरभारतीरसरसिकानां पण्डितप्रकाण्डानाम् । यत् न्यभांत्सीत्तत्रभवान् "भट्टनारायणो" वेणीसंहारं नाम रूपकरत्नमिति । तत्रचेदमस्माकमस्मिन्नवसरे विचारपदवीमवतरति । यत्तत्रभवान्भट्टनारायणः स्वप्रतिभाप्रभावरचितं भारतप्रसिद्धपाण्डवेतिवृत्तप्रतिपादकं नाटकं वेणीसंहारेति नाम्ना प्रथयामास । तच्च नाम सार्थकं वा नवेति ॥

प्रायः कवयो ह्यन्वर्थमेव नाम प्रयुञ्जते दृश्यस्य वा श्राव्यस्य वा काव्यस्येति न परोक्षं प्रेक्षावताम् । यथा कविसार्वभौमः कालि

दासोऽपि चक्रे खल्वन्वर्थमेवाऽभिधामभिज्ञानशाकुन्तलमिति स्वीय-नाटकस्य। दरीदृश्यन्ते खल्वेवमेव सर्वत्राप्यन्वर्थान्येव नामानि काव्यानाम्। अतोऽस्यापि नाटकस्याऽन्वर्थमेव नाम विहितं स्यात्कविनेति द्रढीयान्नो विश्वासः। अतस्तस्मिन्विषये यथामति विचार्येमां लेखनी-मत्र व्यापारयितुमिच्छामः॥

परिगृह्य वेणीसंहारं विचार्यमाणे बहुधा निर्वक्तुं पार्यते। तत्र-तावत्प्रथमंवेणी संह्रियते (संक्षिप्यते) अत्रेति वेणीसंहारः। अथवा वेण्याः (द्रौपदीकेशरचनायाः) संहारः (संहरणम्) संयमनमिति यावत्। नाटकविशेषणत्वात्प्रकृते वेणीसंहारशब्दस्य नपुंसकत्वम्। दुःशासन-विलुलितां वेणीं भीमः संयमितवानिति कथाभागः सुनिपुणं कविना प्रत्यपादीति युक्तमस्य नाटकस्य वेणीसंहारमिति नाम। कविनैवावि-ष्कृतोयं छन्द इति महदानन्दस्थानमस्माकम्। यथा—"स्त्यानपविद्ध-घनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्त व देवि भीमः, (अङ्कः-१। श्लो २१) "बध्यते केशपाशस्ते" इति। (अङ्कः ६। श्लो ६) एवमेव प्रकृतोपपादकानि प्रमाणान्तराणि कविनाऽऽविष्कृतानि वर्तन्ते। तथापि विस्तरभीरुभिरस्माभिरस्मिन्नवसरे नैवोदाह्रियन्ते तानि॥

ननु संहारशब्दान्नाशस्य प्रतीतिर्भवति। नतुसंयमनरूपार्थस्य। निरुक्तार्थस्तूपसर्गबलादायातः। तस्मात्संहारशब्दान्नाशस्यैव द्रुतप्रतीते-स्तदनुरूपेण निर्वचनं युक्तमिति चेत्—वेण्या (दुःशासनविलुलितया-द्रौपदीकेशरचनया) संहारः (संग्रामेणकौरवादीनां नाशः) वेणीसंहारः तदुपवर्णनाद्वेणीसंहारमिति नाटकनाम। नाटकवाचितया वेणीसंहर-शब्दस्य नपुंसकतेति न विस्मर्तव्यम्। कौरवप्रेरितेन दुःशासनेन सदसि कृतं स्वप्रेयस्या द्रौपद्या वेणीविलोलनमसहिष्णुः भ्राजिष्णु-र्जिष्णुः भीमसेनः प्रतिज्ञाय विपक्षभूतानेतान्कौरवादीननाशयदितीति-

वृत्तांशं कविः प्रतिपादितवानित्यतोऽस्य नाटकस्य वेणीसंहारमिति नाम सार्थकमित्युत्पश्यामः। अत्रापि कविसार्वभौमेनैवाविष्कृतं नियामकतया प्रमितं प्रमाणं प्रदर्शयामः। यथा—"चंचद्भुजभ्रमितचण्डगदाभिघात-संचूर्णितोरुयुगलस्य सुयोधनस्य" (अङ्कः १, श्लो. २३) "स चास्याकर्षणक्षमः" (अङ्कः ६, श्लो. ६) इति कविसमुदीरितानि नियामकान्तराणि मेधाविभिरनुसन्धेयान्यत्र ॥

अत्रेयमाशंकाऽवतरति। यत् वेण्या (निमित्तभूतया) संहारः (दुर्योधनादीनां नाशः) इत्यर्थरचनायां क्लिष्टकल्पनापत्तिः। सर्वेषामपि-वेणीसंहारमिति पदश्रवणान्नभवत्यञ्जसा तृतीयातत्पुरुषस्योपास्थितिः। किंतु षष्ठीतत्पुरुषस्य। तथाहि प्रतियोगिनमाकांक्षमाणेन संहारेण सन्निहितैव वेणी प्रतियोगितया स्वीक्रियते। सन्निकर्षात् लाघवाच्च। नत्वसन्निहितानि दुर्योधनादीनि पदानि। गौरवात्। अर्थविप्रकर्षाच्च। अतः षष्ठीतत्पुरुष एव युक्त इति ॥

तस्मात्तदनुरूपतया निर्वचनं क्रियते—

वेण्याः (भानुमतीप्रभृतीनां वेण्याः) संहारः नाशइति। नित्यानुबद्धदृढवैरेण भीमसेनेन महति संग्रामे निहतेषु स्वपतिषु दुर्योधनादिषु भानुमतीप्रभृतिनां युवतीनां केशमुण्डनेनाऽवश्यं वेण्या नाशो भवतीति युक्तं वक्तुमस्य नाटकस्य वेणीसंहारमिति नाम सार्थकमिति। संमतोऽयमर्थः कवेरित्यत्र न विचिकित्सा पदमादधाति। यदाविष्कृतोऽयमाशयः कविनैव वेणीसंहारमित्यनेन। तथाहि—सत्स्वप्यनेकेषु संयमनग्रथनबन्धनादिषु शब्देषु अमंगलप्रतीतिजनकं संहारपदं प्रयुञ्जानः कविः वेणीनाशरूपार्थोऽपि मया कटाक्षितः न केवलं केशसंयमनरूपार्थ इति सुनिपुणं स्वाकूतिमाविष्करोति। न विशिष्य वक्तुमवशिष्यतेऽस्माकमस्मिन्विषय इत्यन्यत्र लेखनीं व्यापारयामः ॥

ननु "भक्षितेऽपि लशुने न शान्तो व्याधिः" यत्संहारशब्दान्नाशस्यैव द्रुतप्रतीतिकत्वमिति निरुक्तार्थो युक्तः। तथापि भीमेन द्रौपदीकेशसंयमनस्यैव प्रतिज्ञातत्वात् भानुमत्यादीनां वेण्या नाश इत्यर्थवर्णनेऽमंगलप्रतीतेश्च नाश इत्यर्थापादन मसमञ्जसम्। तस्मा द्रौपदीकेशसंयमनमित्येवार्थो युक्तः। तथापि द्रौपदीकेशसंयमनमित्यर्थवर्णने द्रुतप्रतीतनाशरूपार्थ परित्यागः। अप्रतीतसंयमनार्थकल्पनमिति गौरवमापतति। किं विधेयम्। "एकंसन्धित्सतोऽपरंप्रच्यवते" इति न्यायोत्रस्थानमूरीकरोति न किमपि कर्तुं शक्यते। उभयतः पाशा रज्जुः। अतः द्रुतप्रतीत नाशरूपार्थमपरित्यज्यामंगलप्रतीतिनिवृत्तिपूर्वकं केशसंयमनार्थप्रतीत्या सुमंगलप्रतिपत्तिर्यथा स्यात्तथार्थः स्वीकार्य इति चेत्—

वेणीसंहारपूर्वकं संहारः वेणीसंहारः इति मध्यमपदलोपी समासः। भानुमतीप्रभृतीनां स्त्रीणां वेणीसंहारपूर्वकं द्रौपद्या केशबन्धनमिति निर्वचने न द्रुतप्रतीत नाशरूपार्थपरित्यागः। द्रौपदीकेशबन्धनमिति प्रतीत्या च सुमंगलप्रतीतिश्चेत्यनवद्यम्। अत्रापि प्रकृतविषयस्य मनसि स्फुटतरसमारोहाय नियामकमेकमुपहारीकुर्मः। यथा—"अ इ भाणुमदि तुह्माणं अमुक्केसु केशहत्थेसु कधं अह्माणं देवीए केसा संजमीअन्ति। (अयि भानुमति युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते) इतिछाया॥

अयि प्रियपाठकाः! सुरभारतीप्रणयिनः! वयमिदानीं दर्शितार्थाः सर्वेप्यनवद्या इत्यत्राहत्य प्रमाणभूतं पद्यमेकमुल्लिख्यास्मात्व्यापारादुदास्महे॥

क्रोधान्धै र्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि-
प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः॥

इति॥ (अंकः ६, श्लो. ४२)

# वेदप्रामाण्यनिरूपणम्.

---

इह खलु सर्वोपि लोकः सुखं मे भूयात् दुःखं मे मा भूदिति सुखावाप्तिं दुःखनिवृत्तिं चापेक्षमाणः तत्तद्विषयविशेषे प्रवर्तमानः वर्तेत इति सुविदितमेव सर्वेषाम् ॥

तत्र तत्तदिच्छानुसारेण तत्तदुपायविशेषानुष्ठानेन तत्तदिष्टसिद्धिः दुःखनिवृत्तिर्वा नियमेन सभवत्येवेति तु न दृष्यते नापि न संभवत्येवत्यप्यनुभूयते । किन्तु कदाचित् कस्यचित्पुरुषस्य तदिच्छानुसारेण-तदुपायानुष्ठानेनेष्ठसिद्धिर्भवति । कदाचित्तस्यैव तदनुष्ठानेऽपीष्टसिद्धि र्नभवति । एवं कस्याचिदिष्टसिद्धिः भवति । अन्यस्य न भवातीत्येवं भूयो वैचित्र्यं कार्येषूपलभ्यते ॥

उपलभ्यमानं चेदं कार्यवैचित्र्यं कारणे वैचित्र्यमन्तरा नोपपन्नं भवितुमर्हतीति तादृशं कारणं कीदृशमिति बुद्धिपूर्वकारिभिः पुरुषैरवश्यं विचारणयिम् । न हि विचारमन्तरेण तादृशार्थनिर्णयः स्वत एव भवितुमर्हति । तथात्वे सर्वस्यापि तादृशार्थनिर्णयस्य स्वत एव सत्वात् निर्णीततादृशार्थानुष्ठाने तत्फलसिद्धिरवश्यं स्यादेव न तु तथा फलसिद्धिः दृस्यते । अतः अज्ञातत्वात् आवश्यकत्वाच्च विचारणीयमेव तादृशं साधारणं कारणम् । यादृशकारणसत्वे नियमेन फलसिद्धिर्भवेत्. यदभावे च न भवेत् तादृशं कारणं कीदृशमिति विचारणायां अदृष्ट रूपमितिब्रूमः । तच्चादृष्टं किंस्वरूपं किंप्रमाणकमिति विचारणयिम् ॥

न तावत् प्रत्यक्षादिप्रमाणैः तादृशमदृष्टमवगन्तुं शक्यम् । यद्यवगन्तुं शक्यं तर्हि सर्वेषामपि प्रत्यक्षादिभिरेव तदवगमसंभवात् सुलभतया तत्संपाद्येत । न तु तथास्ति ॥

उक्तं चापस्तंबाचार्यैः धर्मशास्त्रे—न हि धर्माधर्मौ चरत आवां स्व इति। अस्यार्थः—धर्माधर्मौ पुरुषादिवत् वीध्यां न चरतः—संचारं न कुरुतः। आवां स्व इति—वर्तावहे इति—स्वरूपं दर्शयित्वा न संचारं कुरुत इति । अतः प्रत्यक्षादिभिः अनवगम्यमानत्वात् अवश्यं विज्ञेयत्वाच्च कीदृशं तत्स्वरूपं किंच तत्र प्रमाणमिति विचारणायां सर्वज्ञो भगवान् जैमिनिराचार्यः स्वरूपं प्रमाणंचैकेनैव सूत्रेण सूत्रयामास-चोदनालक्षणोर्थो धर्म इति। अत्र चोदनाशब्दः वेदपरः। लक्षणशब्दश्च प्रमाणपरः । तथाचायमर्थः—वेदरूपेण प्रमाणेन यत् कर्तव्यतया प्रतिपाद्यते स धर्मः ॥

एतादृशधर्माधर्मपदाभिधेयत्वं पुण्यपापापरनामधेययोरदृष्टयोः तज्जनकीभूतयोश्च कर्मणोरवश्यमङ्गीकरणीयं न तु केवलं तार्किकादिवत् विहितकर्मजन्यस्य निषिद्धकर्मजन्यस्य च अदृष्टमात्रस्य धर्माधर्मपदाभिधेयत्वं । कुत इति चेत् श्रीमद्भागवते प्रथमस्कन्धे—

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेन कथासु यः ।
नोत्पादयेद्यदिरतिं श्रम एव हि केवलम् ॥

अस्यार्थः—यः अनुष्ठितः धर्मपदाभिधेयः अग्निहोत्रादिः विश्वक्सेनकथासु रतिं उत्पादयति स एव स्वनुष्ठितः—सुष्ठु—फलसाधनतया अनुष्ठितः। यश्च तत्रप्रीतिं नोत्पादयति तादृशः केवलं श्रम एव-वृथाचेष्टात्मक एव फलसाधनं न भवतीति यावत् । अनेन च अनुष्ठानयोग्यस्य क्रियाविशेषस्य धर्मपदाभिधेयत्वं ज्ञायते। एवं "धर्मः क्षरति कीर्तनात्" इत्यादिधर्मशास्त्रवचनानुसारेणादृष्टविशेषस्यापि धर्मपदाभिधेयत्वं प्रतीयते। कथमिति चेत् तत्रधर्मस्य कीर्तनेन नाशप्रतिपाद-

नात् अनुष्ठीयमानस्य च कर्मणः क्षणद्वयानन्तरं विनापि कीर्तनेन स्वत एव नाशात् कीर्तनजन्यनाशयोग्यमदृष्टमेव तत्रधर्मपदाभिधेय इति भाति एवं च क्रियायाः तज्जन्यादृष्टस्य च धर्माधर्मपदाभिदेयत्वं सुस्पष्टम् ॥

एतादृशं धर्माधर्मपदाभिधेयमेव पुण्यपापापरनामधेयं सकलकार्यसाधारणकारणं । अस्मिंश्च विषये पूर्वोक्तजैमिनीयसूत्रोक्तरीत्या वेद एव प्रमाणं प्रमाणमेव च तादृशो वेदः ॥

अत्र च कथं प्रमाण्यं वेदस्य? वेदो नाम वाक्यसमूहरूपग्रन्थविशेषः किल अयं च केनाचित्पुरुषविशेषेण कस्मिंश्चित्काले निर्मितः उतानादिरित्यभ्युपगम्यते । उभयथापि दुर्घटं प्रमाण्यमिति ब्रूमः— कथमिति चेत् यदि पुरुषनिर्मित इतीष्यते तदा निर्मातुस्तादृशपुरुषविशेषस्य एतादृशादृष्टविषयकपरिज्ञानं केनप्रमाणेन संजातं । न तावत्प्रत्यक्षादिना । अदृष्टस्य प्रत्यक्षाद्यगोचरत्वात् । यदि तादृशमहापुरुषस्य अदृष्टमपि प्रत्यक्षादिगोचरमुपेयते । प्रत्यक्षेण च बुध्वा अदृष्टविशेषं तत्प्रतिपादकं ग्रन्थं वेदाख्यं रचयामासेति चाभ्युपेयते तदा चैत्यबन्दनादिकमदृष्टसाधनमिति प्रतिपादयतो बुद्धवाक्यस्य बुद्धप्रत्यक्षमूलकत्वेन बुद्धाभिमतस्य प्रामाण्यं केन वार्येत । अतः वेदप्रतिपाद्यार्थपरिज्ञानाभावे अर्थं बुध्वा शब्दरचनेति न्यायेन वेदरचना दुरुपपादा भवति । पौरुषेयग्रन्थेषु हि महाभारतादिषु प्रतिपाद्यं पाण्डवकथादिरूपं प्रत्यक्षादिना बुध्वा ग्रन्थरूपेण रचमास भगवान् बादरायणः इति किल लोके प्रसिद्धिः । अतः प्रकृते वेदस्य पौरुषत्वे रचयितुः पुरुषस्य प्रमाणाभावेन प्रतिपाद्यार्थज्ञानासंभवात् तत्प्रणीतस्य वेदस्य सुतरां दुर्घटं प्रामाण्यम् । यदि च प्रामाण्य लोभेन वेदस्यापौरुषेयत्वमभ्युपगम्यते तर्हि शब्देषु प्रमाण्यसाधकत्वेन लोकसिद्धस्य आप्तप्रणीतत्वस्याभावात् सुतरामप्रमाणत्वम् । न हि शब्द-

प्रयोक्तुराप्तत्वानाप्तत्वविचारमकृत्वा शब्दसामान्यस्य प्रामाण्यं प्रतियन्ति लौकिकाः । अतः वेदस्य पौरुषेयत्वे वा अपौरुषेयत्वे वा प्रामाण्यं अत्यन्तदुर्घटं इति चेदत्र वदामः॥

तिष्ठतु तावत् वेदस्य पौरुषेयत्वविचारः । प्रथमं तावत् प्रमाणसामान्यस्य प्रमाणाप्रमाणत्वे किं स्वतः उत कारणान्तरेणेति विचारणीयम् । बहवः किलात्र विषये विप्रतिपन्नाः । तथाहि सांख्याः किल वदन्ति यत्र यस्य स्वाभाविकं सामर्थ्यं नास्ति न तत् तस्यान्येन साधयितुं शक्यं यथा जलस्य दाहसामर्थ्यं वह्नेर्वा सेचनसामर्थ्यमिति॥

इदन्तु नानुमन्यन्ते तार्किकाः प्रामाण्याप्रामाण्ययोः परस्परविरुद्धयोः कारणाभावे स्वत एव अन्यतरनिर्णयो न सेत्स्यति अतः गुणवता कारणेन जायमानं प्रमाणं दोषावता जायमानमप्रमाणमिति प्रामाण्यं अप्रामाण्यं च पराधीनमिति तार्किका वदन्ति ॥

बौद्धास्तु इदं मतं दूषयन्ति—तथाहि यदि कारणगुणदोषावधारणाधीनं प्रामाण्यमप्रामाण्यं च तदा तदवधारणात् प्राक् पूर्वमुत्पन्नं ज्ञानं निस्स्वभावं प्रसज्येत "सर्वं हि ज्ञानं प्रमाणमप्रमाणं वेति राशिद्वयेऽन्तर्भावयितव्यं तदुभयरहितं ज्ञानं किमात्मकं भवेदित्यादि युक्तिभिरिदं मतं दूषयित्वा स्वमतमेवं वर्णयन्ति——द्वयोः पराधीनत्वासंभवात् अप्रामाण्यमेव स्वतः प्रामाण्यन्तु पराधीनमिति ॥

इदं बौद्धमतमेवास्माभिर्दूषणीयं भवति । तदितरमतद्वयस्य पूर्वैरेव दूषितत्वात् । बौद्धमतरीत्या पराधीनमेव प्रामाण्यमिति नांगीकर्तुं युज्यते । यदुत्पन्नमपि ज्ञानं विषयावधारणाय अन्यदेकं कारणान्तरमपेक्षते तच्च कारणान्तरं स्वविषयावधारणाय यदिकारणान्तरमपेक्षेत तदा अनवस्थाभयात् प्रामाण्यमेव सर्वत्र उच्छिद्येत । अतः प्रामाण्यं-

चेदस्ति तस्वत एवेत्यंगीकर्तव्यम् । न हि शुभाशुभादिविषयनिवेदिकां ग्रामान्तरादागतां पत्रिकामुपलभमानाः पत्रिकार्थं सन्दिग्धं वा अप्रमाणमिति वा प्रतियन्ति । किन्तु पत्रिकादर्शनानुपदं प्रमाणत्वेनैव पत्रिकार्थं जानन्ति इति लोके प्रसिद्धम् ॥

अतः प्रामाण्यविषये प्रमाणानां न कारणापेक्षा । अप्रामाण्ये परं कारणमुपपादनीयम् । तच्च कारणं द्विविधं अर्थान्यथात्वज्ञानं कारणगतदोषज्ञानं चेति । तत्राग्निहोत्रादिकमदृष्टसाधनमिति वेदजन्यज्ञाने अर्थान्यथात्वज्ञानं तावत् अर्थस्य प्रमाणान्तरायोग्यत्वादेव नास्ति । कारणगतदोषज्ञानं परं शङ्काहम् । तच्च वेदात्मकशब्दस्य कर्तुरेवाभावात् कर्तृरूपकारणगतदोषः दूरापास्त इति निराकरणीयम् कुतो नास्ति वेदस्य कर्ता इति चेत्—कर्तरि प्रमाणाभावादिति ब्रूमः । यदि कर्ता स्यात् भारतादिषु पौरुषेयग्रन्थेष्विवाविच्छिन्नपारंपर्येण स स्मर्येत । एवं स्मरणयोग्यस्य कर्तुः स्मरणाभावात् नास्ति कर्तेति प्रतीयते ॥

अन्यच्च यदि कर्ता विद्येत आवश्यकं हि तत्स्मरणम् न हि एवमादिविषयेऽनादरः मनागपि शंकितुं शक्यः । निरुपयोगेषु अन्धकूपादिषु किल कर्तृस्मरणस्यानादरः उपपन्नः । वेदस्य तु अनाद्यध्ययनपरंपरया स्वरवर्णादि विषयेऽत्यन्तमादरेण परिपाल्यमानस्य सर्वार्थप्रकाशकत्वेन सर्वप्रमाणमूर्धन्यत्वेन च सर्वास्तिकजनपरिगृहीतस्य कर्तरि अनादरः न संभावयितुमपि शक्यते । कर्तृमहत्त्वज्ञानेन किल कर्तृमत्सु ग्रन्थेषु प्रेक्षावतां महानादरः । यथाभारतादिषु कालिदासादिग्रन्थेषु चै । अतः अवश्यं स्मरणीयस्य कर्तुः अस्मरणात् अन्यस्य च कर्तृसद्भावसाधकस्य प्रमाणस्याभावात् अपौरुषेय एव वेदः इदानीमिव सर्वदापि गुरुशिष्यपरंपरया अध्ययनपरंपरयैव ग्राह्यो वर्तते । अतश्च कारणदोषस्यापि असंभावितत्वात् अप्रामाण्यकारणाभावेन स्वतःप्राप्तं प्रामा·

ण्यं वेदस्य निरपवादं तिष्ठतीति तादृशवेदेन प्रमाणमूर्धन्येन प्रतीयमानयोः पुण्यपापयोः सर्वकार्यसाधकबाधकत्वसंभवात् तादृश पुण्यपापज्ञानपुरस्सरं पुण्यानुष्ठानेन पापपरिहारेण च तत्तदिष्टोद्देशेन श्रेयोऽर्थिभिः तत्तद्विषये प्रवृत्तिः करणीया ॥

एवं रीत्या क्रियमाणा प्रवृत्तिः नियमेन सफला भविष्यति । अतः सर्वैरास्तिकशिरोमणिभिः अदृष्टमपि सहकारितया संपाद्य तत्तदुपायानुष्ठानेन तत्तत्फलं संपादनीयमिति संक्षेपः ॥

ओं तत्सत्

# ब्रह्मसूत्रसारार्थः.

---

शुद्धानन्दोरुसंविद्युतिबलबहुलौदार्यवीर्यादिदेहं
चिंतासंतापलेपोद्भव मृतिमुखराशेषदोषातिदूरम् ।
सद्भिर्वैराग्यभक्तिश्रुतिमतिनियतध्यानजज्ञानयोगात्
गम्यं वंदे मुकुंदाभिधमलममलं ब्रह्म वेदान्तवेद्यम् ॥

इह किल गतसारसंसारपारावारपारं जिगमिषतां निरंतरनिरंतरायस्वस्वरूपपरमसुखानुभवविभवमभिलषतामभ्यर्थनीयस्य श्रीपरिग्रहपरमानुग्रहस्य तदपरोक्षप्रेक्षामंतराऽनुदयात्तदर्थं यथावद्भगवत्स्वरूपमावेदयितुं प्रवृत्तानां निखिलनिगमानां यथावदर्थनिर्णायकन्यायप्रथनात्मकानि ब्रह्मसूत्राणि रचयामास भगवान् बादरायणः ॥

तत्रेदमादिमं सूत्रम् अथातो ब्रह्मजिज्ञासेति । अत्र चतुरध्यायात्मकैतद्ब्रह्ममीमांसाशास्त्रारंभणीयत्वोपयोगिब्रह्मजिज्ञासायाः कर्तव्यत्वं समर्थ्यते—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
प्रयोजनं च पंचैते प्रांचोऽधिकरणं विदुः ॥

इत्युक्तरीत्याऽधिकरणशरीरमुच्यते । तद्विजिज्ञासस्वेतिश्रुतिविहिता ब्रह्मजिज्ञासाऽत्र विषयः कर्तव्या न वेति संदेहः उभयविधव्यापारदर्शनं संदेहबीजं न कर्तव्येति पूर्वः पक्षः जीवातिरिक्तब्रह्मणि मानाभावात् जीवस्य तु स्वप्रकाशत्वेनाहंधीसिद्धत्वेनासंदिग्धत्वान्न विषयत्वम् । अज्ञातः संदिग्धः विपर्यस्तो वा विचारविषयो भवति । ऐंद्रियकस्य जडस्य

निश्चितत्वेना अविषयत्वम् । अतीन्द्रियधर्मादिलक्षणस्त्वत्मा. शास्त्रांतरादिनैव सिद्ध इति न सोपि विषयः । विषयाभावादेव प्रयोजनाधिकारिसंबंधाभावान्न ब्रह्मजिज्ञासा कर्तव्या । तत एव शास्त्रमनारंभणीयमिति पूर्वपक्षे प्राप्ते सूत्रयामास भगवानाचार्यः ॐ अथातोब्रह्मजिज्ञासेति ॥

यत्तावदुक्तं विषयाभावान्न जिज्ञासाकर्तव्येति तदनुपपन्नं । अनात्मजीवात्मनोर्विषयत्वानुपपत्तावपीश्वरस्य तदुपपत्तेः । अत्र यदुक्तं जीवव्यतिरिक्त ईश्वर एव नास्तीति तत्परिहाराय सूत्रकृता ब्रह्मशब्दः प्रयुक्तः । तद्विजिज्ञासस्व तद्ब्रह्मेति जिज्ञासाविधायकश्रुतौ जिज्ञास्ये वस्तुनि ब्रह्मशब्दः श्रूयते । तेन च तत्सकलजीवजडात्मकात्मपंचकाद्विलक्षणमवगम्यते । बृहतेर्वृध्यर्थस्य खल्वेतद्रूपं । अथ कस्माद्उच्यतेब्रह्मेति बृहंतो ह्यस्मिन् गुणा इत्यादि श्रुत्यंतरबलात् । योग्यतया वा ज्ञानानंदाद्यनताप्राकृतकल्याणगुणपूर्णवस्तुवाचको ब्रह्मशब्दः अल्पगुणविशिष्टजीवभिन्नमीश्वरंगमयाति । स च संदिग्धत्वाद्विषयो भवति ॥

नन्वथाप्यत्र कथं निर्णेतुं शक्यते । अनेकार्थकब्रह्मशब्दप्रयोक्तुः सूत्रकारस्यायमेवाभिप्राय इत्यत्र ज्ञापकाभावादितिचेन्न । येनेदं शास्त्रं कृतं तेनैव भगवता कृष्णद्वैपायनेन पूर्वं विरचिते देवमीमांसाशास्त्रांते—सविष्णुराहहि । तं ब्रह्मेत्याचक्षत इति निरंतरसूत्रद्वयेन विष्णुर्ब्रह्मेतिस्फुटमुदित इति स एवात्र जिज्ञास्य इति सूत्रकर्तुरभिप्राय इति निश्चीयते ॥

जिज्ञासा च श्रवणमनननिदिध्यासनरूपा । श्रवणं उपदेशजन्यवाक्यार्थज्ञानं, मननं युक्तिभिरनुचिंतनं, निदिध्यासनं स्वयोग्योपासना—

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥
आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः ।

इत्यादि प्रमाणानुरोधेन निरुक्तब्रह्मजिज्ञासया भगवदपरोक्षज्ञानं जायते। तेन च भगवत्प्रसादः ॥

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।

इत्यादेः। तेन च मोक्षः संपद्यते। स एव पुरुषार्थप्रवरः ॥

धर्मार्थकामाः सर्वेऽपि न नित्या मोक्ष एवहि।

नित्यस्तस्मात्तदर्थाय यतेत मतिमान् नरः ॥ इत्यादेः।

यस्यप्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यतेनापरेण।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि ॥

इत्यादिश्रुतिस्मृतिभिः ब्रह्मजिज्ञासा भगवत्साक्षात्कारतत्प्रसाद मोक्षाणामंगांगिभावोऽवगम्यते। शांतोदांत इत्यादिश्रुतिस्मृत्यनुसारेण शमादिगुणशाली इहामुत्रविरक्तः गुरुदेवताभक्तः मुमुक्षुः ब्रह्मजिज्ञासायामधिकारीति निश्चीयते। तथाच अथ पूर्वोक्तशमदमाद्यधिकारसंपत्यनंतरं अतः उक्तप्रणाड्या जिज्ञासाजन्यसाक्षात्कारजन्यप्रसादद्वारा मोक्षरूपप्रयोजनसत्वात् ब्रह्मणः गुणपूर्णस्य विष्णोः जिज्ञासा विचारः कर्तव्येति शेषः। इत्थं च विशिष्टाधिकारिकमोक्षफलकजीवान्य विष्णुधर्मिकगुणपूर्णत्वादिप्रकारकविचारः कर्तव्य इति फलितार्थः ॥

वक्ष्यमाणमेव सर्वसूत्रार्थं श्रोतृशेमुष्यनुकूलनायादौ संगृह्यकथयितुमप्येतानि सौत्रपदान्यनुसंधेयानि—ब्रह्मपदेनाद्यद्वितीयाध्यायद्वयार्थः सूचितः वक्ष्यमाणरीत्या सर्वेषांशब्दानां भगवति समन्वयसमर्थनेन गुणपूर्णत्वमेवाद्याध्यायफलितार्थः। तत्र युक्तिविरोधः समयाविरोधः श्रुतिविरोधः न्यायोपेतश्रुतिविरोधश्चेति चतुर्विधविरोधः स्फुरति। तैः समन्वयेनिरोधिते गुणपूर्णत्वासिध्याभगवान् दोषवानपि स्यादित्यापतति। तत्परिहायप्रवृत्ते द्वितीयेऽध्याये युक्तिनामाभासत्वस्य समयानामप्रामाण्यस्य विरुद्धतयाप्रतीयमानश्रुतीनामर्थांतरपरत्वस्य च समर्थनेन विरोधे परिहृते

भगवतो-निर्दोषत्वं सिध्यति । गुणपूर्णत्वादेव दोषवर्जितत्वम् । प्रच्युतोशेषदोषैः सदा पूर्तित इत्याचार्योक्तैः । तथाच गुणपूर्णत्वाभिधायकसौत्रब्रह्मशब्धेनाध्यायद्वयार्थः सूचितः अथजिज्ञासापदाभ्यां तृतयाध्यायार्थः सूचितः तत्र वैराग्यभक्त्युपासनादिसाधनानां क्रमेणमोक्षसाधनत्वसमर्थनात् । अतःशब्देन तुरीयाध्यायार्थः सूचितः । तत्र कर्मक्षय, उत्क्रांति. मार्ग, आनंदानुभवरूपज्ञानफलस्य समर्थनात् । तथाच विषयादिसद्भावात् ब्रह्मजिज्ञासाकर्तव्या तदर्थं शास्त्रमारंभणीयमिति सिद्धम् ॥

ननु निर्णायकाभावाद्देवमीमांसासूत्रांतभागस्य बादरायणरचितत्वं नाभ्युपगम्यते । योगवृत्याहि ब्रह्मशब्दस्य विष्णुपरत्वमुक्तं । बृहजातिजीवकमलासन शब्दराशिष्विातिमानेन जीवे रूढोयं ब्रह्मशब्दः योगाद्रूढेर्बलीयस्त्वात् मुख्यस्यैव ग्राह्यत्वात् । तथाच जीव एवेदं ब्रह्म । तस्यनिश्चितत्वेनाविषयत्वान्न ब्रह्मजिज्ञासा कर्तव्येति पूर्वपक्षपरिहाराय प्रवृत्तं जन्माद्यस्य यत इति सूत्रम् । अस्य प्रत्यक्षादिप्रमाणसिद्धस्य सर्वजगतः जन्मादि उत्पात्ति स्थिति संहार नियमन ज्ञानाज्ञान बंधमोक्षाः यतः यस्मात् भवंति तदिति शेषः कार्यः तत् । ब्रह्मेति सूत्रार्थः ॥

यतोवा इमानि भूतानि जायंत इत्यादिपूर्ववाक्यप्रकृतं वस्त्वाधिकृत्य तद्विजिज्ञासस्व तद्ब्रह्मेति तस्य जिज्ञास्यत्वं ब्रह्मत्वं च प्रतिपादितं तथाच जिज्ञासाविधायकश्रुतौ जिज्ञास्ये ब्रह्मणि जगज्जन्मादिकारणत्वमुच्यते तच्चजीवे बाधितमिति मुख्यामपि रूढिं परित्यज्य योगार्थ एवाश्रयणीयः । तथाच ॥

अहं सर्वस्य प्रभवः सर्वस्य चाहं हृदिसन्निविष्टः ।

प्रभवः प्रलयः स्थानं तेषामहं समुद्धर्ता बुद्धिर्ज्ञानमसंमोहइत्याद्यनेकप्रमाणवचनानुसारेण जन्माद्यष्टकर्तृत्वस्य विष्णावेव संभवात्स एव जगत्कर्ता जिज्ञास्यः ब्रह्मशब्दवाच्यश्चेतिसिद्धम् ॥

ननु कार्यत्वाद्यनुमानेन हिरण्यगर्भः समवर्तताग्र इत्याद्यागमैश्चा-न्येषामपि जगत्कारणत्वादिकमवगम्यत इति जन्मादिकारणत्वरूपलक्षण-स्यातिव्याप्तत्वेनाव्यावर्तकत्वात्पूर्वोक्तमयुक्तमिति शंकापरिहाराय—शास्त्र-योनित्वात् तत्तुसमन्वयादिति सूत्रद्वयं प्रवृत्तं। कारणं नानुमानगम्यं तस्य शास्त्रमात्रवेद्यत्वात्। वेदादिशास्त्रेषु विष्णोरन्येषां जगत्कारणत्वाद्याभिधाय-कतयाप्रतीयमानवचसां वेदैश्चसर्वैरहमेव वेद्यः योदेवानांनामधा एक एव तावा एताः सर्वा ऋचः सर्ववेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण-एव प्राणः प्रणयनादेषः साधुत्वात्सन् हरिः स्मृत इत्याद्यनेकप्रमाणपर्यो-लोचनया श्रुतितात्पर्यनिर्णायकोपक्रमादिलिंगसंघेन च विचार्यमाणे कारणत्वेन कृत्स्नशास्त्रमुख्यप्रतिपाद्यं वस्तु विष्णूवाख्यं ब्रह्मेवेति समर्थितं॥

ननु यतोवा चो निवर्तने अशब्दमित्यादिना केनापि शब्देना-वाच्यस्य परब्रह्मणः सर्वशास्त्रमुख्यप्रतिपाद्यत्वं स्तन्यपानासमर्थस्य शिशो-श्चणकभक्षणवदत्यंतासंभावितमिति पूर्वपक्षपरिहारायप्रवृत्तं—इक्षतेर्नाशब्द-मिति सूत्रं। तत् ब्रह्म अशब्दं न शब्दावाच्यं न भवति कुतः इक्षतेः ज्ञानविषयत्वात् परात्परं पुरिशयं पुरुषमीक्षत इति श्रुतौ ब्रह्मणः ज्ञानवि-षयत्वमुच्यते नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयंतीत्यादिना प्रत्यक्षा-नुमानावेद्यस्य इक्षणं शब्दवाच्यत्वमन्तरा न संभवतीति ब्रह्मणः वाच्य-त्वसिद्धिः संभवति। साकल्येनावाच्यत्वपरापूर्वपक्षश्रुति रिति न विरोधः॥

ननुकथमेतदुपपद्यते प्रतिज्ञामात्रस्यासाधकत्वादित्याशंकापरिहारा-याध्यायशेषः प्रवृत्तः। चतुर्ष्वपि पादेषु भगवदन्यत्रप्रसिद्धानां हरावन्यत्र च प्रसिद्धानामपि शब्दानां बलवच्छ्रुति लिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां च नामलिङ्गभेदेनोभयविधानामुक्तानां शब्दानां गुणिसामान्य-वाचकत्वगुणवाचकत्वा धिदेवगतत्वाधिभूतगतत्वाध्यात्मगतत्वाधिवेदग-तत्वाद्यवच्छेदकधर्मेण क्रोडीकृतानामनेकेषां शब्दानां परमात्मनि समन्वय-

यः समर्थ्यते। सूत्रस्याल्पाक्षरत्वेन सर्वशाखानिर्णयायोगात्सजातीयशब्दोपलक्षकत्वं सूत्रघटकानंन्दमर्यादिसमन्वेतव्यशब्दानामङ्गीकार्यं। केषांचिदिन्द्रादिपदानां शब्दप्रवृत्तिनिमित्तपौष्कलयरूपमहायोगेन विद्वद्रूढ्या च भगवत्परत्वं केषांचिद्दुःखि बद्ध—अवरादि शस्दानां प्रवृत्तिनिमित्तदुःखबन्ध—अवरत्वादिधर्माणां भगवत्यभावेपि अन्यत्र गतानामेषां भगवदधीनत्वेन भृत्यगतजयपराजययोः राजाधीनत्वेन राजाजयीत्यादिवत् भगवत्परत्वं संभवतीति समर्थितं ॥

कर्मकालक्रमदेशआधिकारिसाधनाद्यवश्यविज्ञेयविषयप्रतिपादकानां निखिलनिगमानां परब्रह्मप्रतिपत्त्यंगचित्तशुद्धिसंपादककर्मस्वरूप निष्पादकवस्तुबोधकत्वात्परब्रह्मण्येव तात्पर्यमित्यभिहितं ॥

तथाच ब्रह्ममीमांसाशास्त्रोदाहृतन्यायानुसंधानानुगृहीतागमतत्वार्थज्ञानपूर्वकमधिकारी निरुक्तसाधनं महता प्रयत्नेन संपाद्य भगवत्प्रसादेनानुगृहीतमात्यंतिकानिष्टनिवृत्तिविशिष्टपरमसुखानुभवविभवरूपमनल्प — स्थिरं कैवल्यमासाद्य यथाकामं विहरतीतित्यतो ब्रह्मविचारः कर्तव्य इति द्वैतमतरीत्या सूत्राणामाशय इति शम् ॥

होलवनहल्लि शेषाचार्यः.

# भगवदाराधनम्.

---

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाश्शिरोद्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः
चित्रं रंरंम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमत्र विमृश्यताम् ॥

## उपोद्घातः.

इहेदानीं खलु जगति त्रिविधाः पुरुषास्समुपलभ्यन्ते । तत्राद्याः केवलैहिकसुखतत्पराः तादृशसुखानुकूलविद्याशिल्पवाणिज्यादिव्यापारनिरताः भूयांसः पुरुषाः । ततश्चाल्पाः कतिचन ऐहिकामुष्मिकोभयविधसुखाभिलाषिणः तदनुगुणवैदिकलौकिकोपायानिरताः तदनुकूलसंस्कृतप्रकृतविद्याविशारदाश्च सन्ति, ते द्वितीयाः । तृतीयाः पुनस्ततोप्यल्पीयांसः केचनामुष्मिकैकपरायणाः सर्वविधविषयविरक्ताः ब्रह्मपराः ब्रह्मनिष्ठाः प्रपञ्चोपशममेवाकांक्षमाणाः सन्यासिनः ऋषय श्चेति ॥

अथच या पुनरिदानीमुपलभ्यमाना संस्कृतविद्या चतुर्दशविद्यास्थाना श्रुतिस्मृतीतिहासपुराणादिमयी तदनुसंधिन्यपि साहित्यविद्या तस्यां तार्तीयीककोटिप्रविष्टानामेवाधिकारः । ततश्च संस्कृतविद्या प्रपचोपशमोद्देश्यवती सर्वविनाशिनी लोकसन्तानकारिभिरनुपादेया

सर्वविधलौकिकव्यापारप्रतिरोधिनी आलस्यप्रदायिनीत्यादिना विलेखनविदूरेण प्रकारेणाद्यापि महान्तः पुरुषप्रवराः विद्यास्थानाधिकारिणः संस्कृतविद्याभिमानशालिनोपि मुक्तकण्ठं कथयन्ति ॥

अत्र किमयमधिकारिविभागः तदुपायविभागः तदनुष्ठानविभागश्च समुचितः पारमार्थिकः? आहोस्वित् सर्वत्रानुगतं किञ्चित्तत्त्वमस्तीति विप्रतिपत्तौ सर्वसामरस्यं विशदयितुमस्माकमेषप्रक्रमः । तथा—सैषा संस्कृतविद्या परमार्थतः लोकस्यैवोपकारिणीतीममंशमपि विशदयामः ॥

वैदिको धर्मः.

न सा सभा यत्र न सन्ति वृद्धाः न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम् ।।
(पराशरः) ॥

इह किल प्रपञ्चे सकलमपि वस्तुजातं प्रतिक्षणं परिणममानमन्यथान्यथा व्यवतिष्ठते इति सर्वानुभवसिद्धम् । तदनुरोधेन पुरुषाणामभिप्राया अपि विभिद्यन्ते इति न विवदितव्यम् । पुरुषाभिप्रायैकनिबन्धना धर्मपरिस्थितिरपि विचित्रेति विश्वो विजानाति । अत एव—

देशभेदात्कालभेदात्पुंभेदादन्यथान्यथा ।
पर्यवस्यति शास्त्रार्थ इत्याहुर्माधवादयः ॥

अतएवात्रैव भारतभूमौ धर्मतत्त्वे विकल्पाः बहवस्समुपलभ्यन्ते । वैदिकेपि च सिद्धान्ते नानाविधेषु विकल्पेषु कञ्चित् विकल्पं निदर्शयामः । पूर्वे हि वैदिकाः जैमिनिप्रभृतयः यागं दानं होममेव धर्मं व्यवास्थापयन् । (१-३-४) शाबरभाष्यम्—" गुरुरनुगन्तव्यः, तटाकं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यम् " इत्यादिषु गुरोरनुगमात्प्रीतो गुरुः अध्यापयिष्यति । प्रपास्तटाकानि च

परोपकाराय न धर्माय । गोत्राचिह्नं शिखाकर्म" इत्यादिनां उपकारो न धर्म इति निर्णीतमस्ति । दृष्टार्थत्वं च व्यवस्थापितमस्ति ॥

इदानीं पुनः परोपकार एव धर्म इति सिद्धान्तः । नात्र बहुवक्तव्यमपि किंचिदुच्यते—व्यासः—

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

इति ॥ मनुयाज्ञवल्क्यप्रभृतयोऽपि हि धर्मज्ञाः—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधः दशकं धर्मलक्षणम् ॥—(मनु.)

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥—(याज्ञ.)

अमार्गेण प्रवृत्तानां व्याकुलीकृतचेतसाम् ।
निवर्तकं धर्मशास्त्रं व्याधीनामिव भेषजम् ॥

इत्यादिना परोपकारपर्यवसायिन एवात्मगुणान् धर्मान् व्यजानन् । तत्रापि वर्णाश्रमाचाररूपान् धर्मान् "दयादाक्षिण्यविनयाद्यन्वितो वृत्तविशेष आचार इत्युक्तं भवति" इति पराशरमाधवीयनिर्णयेन आत्मगुणेष्वेवान्तर्भूतान्विजानन्ति सर्वज्ञा व्याख्यातारः । तथा तपः प्रभृतयोऽपि धर्माः—

अहिंसा सत्यवचनं आनृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीराः न शरीरस्य शोषणम् ॥

इति पराशरमाधवीयादाहृत (१-६२) कूर्मपुराणवचनेन आत्मगुणेष्वेवान्तर्भूता इत्यलम् ॥

## ईश्वरस्वरूपं रूपं च.

ये पुनरिदानीं दार्शनिकेषु चार्वाकलोकायतादिपदव्यपदेश्यास्ते प्रायः पूर्वोक्तेषु त्रिविधेषु पुरुषेषु प्रथमामेव कोटिमाटीकन्ते । ते खलु लौकिकं पुरुषधौरेयं सर्वलोकाभयङ्करं दयादाक्षिण्यादिसकलशुभगुणसमेतं राजाधिराजानमेव परमेश्वरं प्राहुः । तदानुकूल्यप्रातिकूल्ये एव पुण्यापुण्ये । इममंशं परमवैदिकाः व्यासादयोऽपि—

अष्टाभिः लोकपालानां मात्राभिर्निर्मितो नृपः ।
महती देवता ह्येषा, नाविष्णुः पृथिवीपतिः ॥
परोक्षा देवतास्सर्वा राजा प्रत्यक्षदेवता ।
प्रसादश्च प्रकोपश्च प्रत्यक्षो यत्र दृश्यते ॥

इत्यादिना भङ्ग्यन्तरेणाभिप्रयन्ति ॥

ये पुनः निरनुग्रहेश्वरवादिनः तेऽपीश्वरमनुजानन्तोऽपि तदुपासनेन परं औषधपान, पञ्चगव्यप्राशन, गङ्गास्नानादिना रोगपापतापादि परिहारवत् पापक्षयं मोक्षं च प्राहुः । नह्यत्रौषधस्य पञ्चगव्यस्य गङ्गाया वा निग्रहानुग्रहौ स्तः । तथेश्वरस्यापि । स्वभाववादोयं प्रायः । तथापि विहितानुष्ठानं निषिद्धवर्जनं च स्वरूपेणोपादेयमेवेत्येतेषां राद्धान्तः ॥

ये च सानुग्रहेश्वरवादिनः परमवैदिकाः श्रुतिस्मृतीतिहासपुराणादीनां परमेश्वराज्ञारूपतां विजानन्ति । अवगच्छन्ति ते हि परमेश्वरं सर्वज्ञं सर्वशक्तं परमकारुणिकं सर्वव्यापकं सर्वाधारं सर्वनियन्तारं किं बहुना—सकलकल्याणगुणाकरं समस्तदोषरहितमपि ॥

तस्यचाद्यं मुख्यं रूपं विश्वम् । अत एव स विश्वरूपः । अत्र पुरुषसूक्तं—"सहस्रशीर्षा पुरुषः" इत्यादि । सहस्रनामस्तोत्रेऽपि प्रथमं नाम विश्वमिति । अन्वर्थवेदान्ताभिधानायां वाजसनेयिसंहि-

तोपनिषदि—"ईशावास्यमिदं सर्वम् ॥ इति ॥ गीतादिषु तु—

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
सर्वस्यचाहं हृदि सन्निविष्टो, ज्ञानी त्वात्मैव मे मतम् ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥
जगदेतन्महाश्चर्यं रूपं यस्य महात्मनः ।
तेनाश्चर्यवरेणाहं भवता कृष्ण संगतः ॥ विष्णुपु ॥

इत्यादि प्रमाणजातमस्ति ॥

## आराधनम्.

चराचराणि भूतानि सर्वाणि भगवद्वपुः ।
अतस्तदानुकूल्यं वै कर्तव्यमिति निश्चयः ॥ (अहिर्बुध्न्य)

येन केनाप्युपायेन यस्यकस्यापि देहिनः ।
सन्तोषं जनयेत् प्राज्ञः तदेवेश्वरपूजनम् ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यासि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

इत्यादिभिश्शास्त्रैः परमेश्वरस्य प्रधानभूतं प्रियतमं च प्रपञ्चलक्षणं यद्रूपं तद्रूपोपकारकरणं लोकसेवाभिधानं स्समाराधनमेव भगवतः प्रियतममित्यवधार्यते ॥

नैव खल्वेतावता अर्चाविग्रहरूपाणां मन्दिरकरणोत्सवकरण-मालाकरणादीनां वैफल्यमाशङ्कनीयम् । तादृशीनां सर्वासामपि सेवाना-मत्रैव विश्रमस्य श्रीभागवतादि सर्वशास्त्रसम्मतत्वात् । मुक्तिदशायाम-प्युभयविभूतिनाथस्य कैङ्कर्यकरणमेव हि परमः पुरुषार्थः । अत एवेदं-भगवद्वचनम्—

- मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् ।
या विशेषतः ॥ इत्यादि ॥

परिग्रानिशयः

अत एव महतामनुष्ठानमभिसंधिश्चेत्थमवगम्यते ।

इतिहाससमुच्चये—

प्रायशो मुनयस्सर्वे स्वात्मपोषणतत्पराः ।
द्वैपायनस्तु भगवान् सर्वभूतहिते रतः ॥
श्रूयतां सिंहनादोयमृषेस्तस्य महात्मनः ।
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥ इति ॥

श्रीभागवते रन्तिदेव वाक्यम्—

न कामयेऽहं गतिमीश्वराणा
मष्टर्धियुक्तामपुनर्भवं वा ।
आर्तिं प्रपत्स्येऽखिलदेहभाजा
मन्तः स्थितो येन भवन्त्यदुःखाः ॥ इति॥

बाह्यानामप्येष स्वभावः अस्मदीयैरनूद्यते । अनूदितमलकारबुद्ध वाक्यं तन्त्रवार्तिके । यथा—

कलिकलुषकृतानि यानि लोके
मयि निपतन्तु विमुच्यतां हि लोकः ॥ इति ॥

भास्करभाष्योदाहृतं बद्धपद्यमिदम्—

आकाशस्य स्थितिर्यावद्यावदप्यवनेः स्थितिः ।
तावन्मम स्थितिः भूयात् लोकपापानि निघ्नतः ॥ इति ॥

तथा—अभिनयकाव्यकर्तारोऽपि महाकवय इममभिप्रायं वाचोयुक्त्या निरूपयन्ति । तथाहि नागानन्दनाटके चतुर्थेऽङ्के—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दास्सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैः वृथा स्थीयते ॥

इति ॥ अनेन लोकपरित्यागोऽनुचित इति स्फुटमवधार्यते ॥

अमुमेवार्थं हृदिनिधाय भगवद्यामुनाचार्यवर्या अपि स्तोत्ररत्ने एवमाहुः—यथा—

न देहं न प्राणान् न च सुखमशेषाभिलषितं
नचात्मानं नान्यत्किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ क्षजमपि सहे यातु शतधा
विनाशं तत्सत्यं मधुमथन विज्ञापनमिदम् ॥

इति ॥ अत्रशेषत्वपदेन हि कैंकर्यमेव विवक्षितम् ॥

अत एव भगवद्रामानुजाचार्यैः भगवद्गीताभाष्ये—९-३४, १८-६४ " यजनं नाम परिपूर्णशेषवृत्तिः " इत्यभिहितम् ॥ तथा नमः पदार्थोपि तादृश एवेति रहस्ये सुव्यक्तम ॥

तथा आश्वमेधिकपर्वणि—

रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना ।
हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥ इति ॥

काञ्चनमालीवाक्यम्—

धर्मं भजस्व सततं त्यज भूतहिंसाम्
सेवस्व साधुपुरुषान् जहि कामशत्रून् ।
अन्यस्य दोषगुणकीर्तनमाशु मुञ्च
सत्यं वदार्चय हरिं भज जन्मलाभम् ॥

इति ॥ एतेन येषा दैवी संपत् आत्मगुणपूर्तिः तस्य लोकसेवैव परमं भगवदाराधनमिति सारतमोऽर्थः ॥

### ऋणत्रयापाकरणम्.

"जायमानो वै ब्राह्मणः त्रिभिः ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ॥ इति ॥

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥ (मनु.)

ब्रह्मचर्यं नाम विद्याभ्यासः । स च दक्षादिभिः लोकानुग्रह पर्यवसायीति स्मृतः ॥ यथा

वेदस्वीकरणं पूर्वं विचारोभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यः विद्याभ्यासो हि पञ्चधा ॥ इति ॥
"अध्यापनं ब्रह्मयज्ञः" इतिमनुः ॥

ततश्च ज्ञानप्रदानपर्यन्तेनैव विद्याभ्यासेन ऋषिऋणमपाकृतं भवति ॥

यज्ञादिकमपि देवऋणापाकरणात्मकं लोकानुग्रहकरं, यथा—

त्रैवार्षिकाधिकान्नो यः सहि सोमं पिबेत् द्विजः ।
प्राक्सौमिकीः क्रियाः तुर्यात् यस्यान्नं वार्षिकं भवेत् ॥
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
इति शान्तौ राजधर्मे दस्यूनामपि चोदितम् ॥

"देवतोद्देशेन द्रव्यत्यागो यागः" इति हि निर्वचनम् । विस्तरस्त्वस्मदीये निमित्तवादे द्रष्टव्यः ॥

सन्ततिकरणलक्षणं पितृऋणापकरणं तु—(वाजिसनेयि ब्राह्मणे)— "तस्मात्पुत्रमनुशिष्टं लोकहितमाहुः । तस्मादेनमनुशासति । सपुत्रवानास्मिन् लोके प्रतितिष्ठति" इति शतपथीयश्रुत्या न केवलं पुत्रोत्पा-

दनमात्रनिर्वर्त्यम् । किं तर्हि—अनुशासनपूर्वकलोकोपकारशिरस्कमित्ये-
तत् विद्वद्भिरिदम् ॥

### पुष्पांजलिसमर्पणम्.

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ गीता ॥

अस्य विवरणं श्रीभागवतम्—

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ।
गन्धनिर्यासभस्मास्थितोकैः कामान्वितन्वते ॥
एतावज्जन्मसाफल्यं प्राणिनामिह जविताम् ।
प्राणैरर्थैर्धिया वाचा श्रेयआचरणं सदा ॥ इति ॥

अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ॥
शान्तिः पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैवच ।
सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत् ॥

यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् ।
यत्तपस्यामि भगवन् तत्करोमि त्वदर्पणम् ॥

ओ३म् शम्

# विशिष्टाद्वैतम्

---

विशिष्टाद्वैतसिद्धान्त सम्प्रदायो निरूप्यते ।
कृते प्रसङ्गादन्योंऽशः विमर्शकविपश्चिताम् ॥
सिद्धान्ताभिनिवेशेन नास्माकमयमुद्यमः ।
विरोधा बहवोऽनेन शाम्यन्तीति प्रकाश्यते ॥

यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किं
ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे ।
निशम्यन्तां यद्वा निजमततिरस्कारविगमात्
निरातङ्काः टङ्कद्रमिडगुहदेवप्रभृतयः ॥

(यतिराजसप्ततिः)

## विशिष्टाद्वैतम्.

अथास्य सम्प्रदायस्य विशिष्टाद्वैतमिति व्यवहारमूलं यथा— वेदार्थसंग्रहे—तत्त्वमसिवाक्यार्थविचारप्रकरणे—"तत्पदं जगत्कारण-भूतं सर्वकल्याणगुणाकरं निरवद्यं निर्विकारमाचष्टे । त्वमिति च तदेव ब्रह्म जीवान्तर्यामिरूपं सशरीरजीवप्रकारमाचष्टे" इति दृश्यते ॥

तात्पर्यदीपिकायां श्रीसुदर्शनाचार्यप्रणीतायां वेदार्थसंग्रहव्या-ख्यायां—"षड्विधतात्पर्यलिङ्गमद्वैतविषयमित्यवगतम् । तत्तु न निर्वि-शेषाद्वैतविषयम् । अपि तु विशिष्टाद्वैतविषयम्" इति दृश्यते ॥

श्रीभाष्ये महासिद्धान्ते श्रुतिघट्टे "सामानाधिकरण्यस्यानेकवि-शेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः" इति

दृश्यते ॥ श्रीभाष्यटीकायां सुदर्शनार्यैरेव विरचितायां श्रुतदीपिकायां—"एवं सति विशिष्टाद्वैतपरत्वे स्पष्टमुपक्रमोपसंहारादिलिङ्गसत्त्वम्" इति लिखितमस्ति ॥

श्रीभाष्ये — निवर्तकानुपपत्तिप्रकरणे— "तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम् । प्रकारद्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य" इति ॥ तथा —आनन्दमयाधिकरणे— "अनेकविशेषणविशिष्टैकार्थवाचित्वं समानाधिकरणपदानाम् । तत्त्वमसीतिसामानाधिकरण्ये तत्पदं जगत्कारणत्वादिविशिष्टं परमात्मानमाचष्टे। त्वमिति च तमेव सशरीरकजीवशरीरकमाचष्टे इति सामानाधिकरण्यं मुख्यवृत्तम्" इति ॥

एवं च सामानाधिकरण्य विवरण निबन्धनोऽयं व्यवहार इति सिद्धः भवति । तत्र तात्पर्यदीपिकायां श्रुतदीपिकायां च विशिष्टाद्वैतमिति पदं श्रूयते । श्रीभाष्यादिप्राचीनप्रबन्धेषु विशिष्टैक्यमिति श्रूयते। उभयोस्समानार्थकत्वेपि श्रीशङ्करभाष्यटीकासु रत्नप्रभादिषु—आरम्भणाधिकरणे—"शुद्धाद्वैतं स्वमतमुक्त्वा" इत्यादिव्यवहारात् "विशिष्टं शुद्धान्नातिरिच्यते" इति शास्त्रकृतां व्यवहाराच्च शुद्धपदस्य विशिष्टपदं प्रतियोगीति विशिष्टाद्वैतपदमेव श्रुतप्रकाशिकाचार्योपज्ञं व्यवहारविषयतया प्रसिद्धमासीदिति विजानीमः । अत एव पाराशर्यविजयारम्भे महाचार्यैः 'शुद्धाद्वैतविषयमिति परे । विशिष्टाद्वैतविषयमिति वेदान्तिनः" इति लिखितमस्ति ॥

अयमप्यपरो विशेषः—श्रुतप्रकाशिकायां महासिद्धान्ते भेदनिषेधनिरूपणप्रकरणे—"कार्यकारणनिबन्धनमैक्यं नाम अवस्थाद्वयापन्नाचिदचिद्वस्त्वेकत्वं, यथा रूपस्पर्शविशिष्टस्य घटस्य तादृशमृद्द्रव्येणैक्यम् । चिदाचिदात्मकजगद्विशिष्टस्य निरतिशयबृहत्वविशिष्टस्य च ऐक्यं प्रका-

यैक्यम् । यथा नैल्यविशिष्टस्य उत्पलत्वविशिष्टस्यैक्यम । एवमुभयविधविशेषणविशिष्टधर्म्येकत्वमैक्यशब्दार्थः । यद्वा—जगतः तत्प्रकारतैकस्वभावतया पृथगवस्थानासंभवात् तदन्तर्गतत्वं तेन प्रकारेणैक्यं न तु स्वरूपैक्यं, विशिष्टान्तर्भाव एव ऐक्यमित्यर्थः" इत्युक्तं दृश्यते ॥

ततश्च विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति एका व्युत्पत्तिः विशिष्टे अद्वैतं विशिष्टाद्वैतमित्यपरा च व्युत्पत्तिरिति सिद्ध्यति । द्वितीया चेयं व्युत्पत्तिः नेहनानेत्यादिनिषेधवाक्यार्थदृष्ट्यनुगुणा । तत्प्रत्यनीकेत्यत्र- "उभयविधैक्यप्रत्यनीकनानात्वं निषिद्ध्यते इत्यर्थः" इति हि दृश्यते ॥

## अपृथक्सिद्धिः.

श्रीभाष्ये—भेदाभेदनिरासप्रकरणे—"इयांस्तु विशेषः' पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हाः" इति ॥ तथा—"स्वनिष्ठानामेव हि द्रव्याणां कदाचित्कचित् द्रव्यविशेषणत्वे मत्वर्थप्रत्ययो दृष्टः दण्डी कुण्डलीति । न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणां, तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव" इति ॥ तथा—"अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थो वेदार्थसंग्रहे-समर्थितः" इति ॥

मुण्डकभाष्ये—१–१–३ "इह तु जगद्ब्रह्मणोः स्वरूपतो भिन्नयोः केनचिदाकारेणाभेदो वक्तव्यः । स क इति विचारे 'अपृथक्सिद्धविशेषणत्वं', इति सहस्रकृत्वोऽभ्यस्तापृथक्सिद्ध्यैक्यमेव भाष्यकृदभिमतामिति प्रतीयते । सिद्धिर्नाम स्थितिः प्रतिपत्तिश्च । पृथक्सिति-प्रतिपत्त्ययोग्यः" इति भाष्यादि ग्रन्थेषु बहुशः व्यवहारदर्शनात् । स्थितिप्रतिपत्त्योरैक्यं अवयवावयविजातिव्यक्तिगुणगुणिस्थलेषु पृथक्स्थितिप्रतिपत्त्योरभावादवसीयते । 'पृथक्प्रतिपत्तिकार्याणामेव पृथगुत्पत्त्यादिक-

मपेक्षितम्' इत्यादि श्रुतप्रकाशिकाग्रन्थपर्यालोचनायां यस्योत्पत्ति-विनाशापक्षयसत्तादिकमाश्रयोत्पत्त्यादिनैव व्यवह्रियते तत्तदपृथक्सिद्ध-मिति ततश्च विकृतेः प्रकृतिसत्तातिरिक्तसत्ताशून्यत्वात् अभिन्नसत्ताक-कारणत्वमुपादानत्वं, तदेवचात्मत्वम् ॥

न च प्रपञ्चस्य ब्रह्मसत्तातिरिक्तसत्ताभावे मिथ्यात्वं स्यादिति वाच्यम् । यथा गुणगतजात्यनभ्युपगन्तृमते रूपादौ सद्बुद्धेः द्रव्यगत-सत्ताविषयत्वेऽपि न रूपादिमिथ्यात्वम्, यथा वा द्रव्यगतगुणादिषु द्वित्वैकत्वादिसंख्याप्रतीतेः द्रव्यगतसंख्यानिर्वाह्यत्वेऽपि रूपादिगतसंख्या प्रतीतेर्न भ्रान्तित्वं, यथा वा सिद्धान्ते घटत्वाद्यवस्थायाः मृद्द्रव्यापेक्षया उत्पत्तिस्थितिसत्तानां पार्थक्याभावेऽपि न तत्रोत्पत्तिस्थितिसत्ताप्रतीतेः भ्रान्तित्वं, एवं प्रपञ्चगतसत्ताप्रतीतेः ब्रह्मसत्तानिर्वाह्यत्वेऽपि न तत्सत्त्व-प्रतीतेः भ्रान्तित्वं न वा प्रपञ्चस्य मिथ्यात्वम्" इति लिखितमस्ति ॥ ततश्चापृथक्सिद्धविशेषणवाचिपदस्य विशेष्यपर्यन्तत्वलक्षणापर्यवसानवृ-त्त्या सर्वसामानाधिकरण्योपपत्तिरिति संक्षेपः ॥

### अपर्यवसानवृत्तिः.

श्रीभाष्ये निवर्तकानुपपत्तिप्रकरणे तत्त्वमसिवाक्यार्थविचारे — "जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन गौरश्वो मनुष्यो देवो जातः कर्मभिरिति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम् । जातिगुणयोरपि द्रव्यप्रकारत्वमेव खण्डो गौः शुक्लः पट इति सामाना-धिकरण्यनिबन्धनम् । मनुष्यत्वादिविशिष्टपिण्डानामपि आत्मनः पदा-र्थतयैव प्रकारत्वात् मनुष्यः पुरुषः षण्डो योषिदात्मा जात इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिब-न्धनम् । न परस्परव्यावृत्ता जात्यादयः । स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचिद्द्रव्यविशेषणत्वे मत्वर्थप्रत्ययो दृष्टः दण्डी कुण्डलीति ।

न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम् । तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ॥

मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वं च जात्यादितुल्यम् । एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः ॥

आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणात् निष्कर्षकशब्दोऽयं शरीरादिशब्दः । यथा गोत्वं शुक्लत्वं आकृतिः गुणः इत्यादिशब्दाः । अतो गवादिशब्दवत् देवमनुष्यादिशब्दाः आत्मपर्यन्ताः । एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वात् जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थः वेदार्थसंग्रहे समर्थितः" इत्युक्तमस्ति ॥

एवं च पदानां वृत्तिः द्वयी पर्यवसिता अपर्यवसिता चेति । आद्या लौकिकी । अनन्तरा वैदिकी । सा वेदान्तश्रवणेन व्युत्पाद्यते । श्रवणविधुराः जनाः लौकिक्या व्यवहरन्ति । प्रह्लादिवामदेवादिव्यवहारस्तु वेदान्तव्युत्पत्तिमूल इति सिद्धं भवति ॥

आनन्दमयाधिकरणे—प्रकारवाचिनां शब्दानां प्रकारिण्येव पर्यवसानात् शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोंशः । तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्यवस्यति । अत एव गौरश्वो मनुष्य इत्यादिप्रकारभूताकृतिवाचिनश्शब्दाः प्रकारिणि पिण्डेऽपर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्म-

वाचिशब्देन सामानाधिकरण्यं मुख्यमेव। यस्य पदार्थस्य कस्य चित्पदार्थतयैव सद्भावस्तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिः तद्वाचिनां शब्दानां स्वाभिधेयाविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टद्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव ॥

अयं भावः—सिद्धिस्सत्ता प्रमाणसंबन्धयोग्यत्वरूपा। स्थितिः तदनुवृत्तिः। अपृथक्छब्दः सिद्ध्यादिसाधारणः। प्रतीति शब्देन अपृथक्प्रतीतेः स्वतः प्राप्तत्वं विवक्षितम्। प्रकारतैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकम्। तत्रापि निष्कर्षकशब्दान्यत्वे स तीति विशेष्टव्यम् ॥

सैषाऽपर्यवसाना वृत्तिः कुमारिलश्लोकवार्तिके वाक्याधिकरणे वाक्यार्थविषयेऽङ्गीकृता। यथा—

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः।
तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥
अशब्दश्चापि वाक्यार्थे न पदार्थेष्वशाब्दता।
वाक्यार्थस्येव नैतेषां निमित्तान्तरसंभवः ॥ इति ॥

अत्र न्यायरत्नाकरे पार्थसारथिमिश्राः प्राहुः। यथा—सतिं पदार्थानां शाब्दत्वे तद्वारेणास्ति वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वं, तथा च तत्परत्वाच्च शब्दानां शाब्दत्वं सिद्ध्यति। वाक्यार्थे हि शब्दानां तात्पर्यं न पदार्थेषु, तेषां प्रमाणान्तरसिद्धत्वात्, अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितः। तथापि तात्पर्यव्यापृतेः अपर्यवसितायाः वाक्यार्थपर्यन्तत्वात् तात्पर्ये शब्दस्य प्रामाण्यात् सिध्यति शब्द प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति ॥

इदमेवापर्यवसानवृत्तिव्यवहारे निदानं स्यादित्युत्प्रेक्षामहे ॥

### बादरायणः वेदव्यासः

अपिचेदमपरं चिन्त्यते—शारीरकं शास्त्रमिदं बादरायणाचार्य प्रणीतमिति संप्रदायः । श्रीमति शांकरे भाष्ये अन्तिमसूत्रावतरणिकायां "इत्यत उत्तरं भगवान् बादरायण आचार्यः पठति" इति स्फुटं दृश्यते ॥

तथा भास्करीयेऽपि भाष्ये (२४९ पु) न शक्यते वचनशतेनापि वस्तुतत्त्वमन्यथाकर्तुम् । "मनसैतान् कामान्, ब्रह्मगमयति" इति प्राप्तिपरा. न भेदप्रतिपादनपरा इति मत्वाऽऽह भगवान् बादरायणः—अनावृत्तिश्शब्दादिर्ति ॥

श्रीभाष्ये श्रीमध्वभाष्ये इतरेषूपलभ्यमानेषु भाष्येषु च भगवान् बादरायण एव सूत्रकर्तेति स्पष्टमेव स्थितम् ॥

स च भगवान् बादरायणाचार्यः कृष्णद्वैपायनापरनामा भगवान् वेदाचार्यो वेदव्यास एव वा? अहोस्विदन्य एव वा इति कश्चिद्विशयस्समुन्मिषति । विशिष्टाद्वैतादिसंप्रदाये अभेदपक्ष एव परिगृहीतः प्रतिष्ठापितश्च—पाञ्चरात्राधिकरणे । मङ्गलपद्य एव "पाराशर्यवचस्सुधाम्" इत्यभिहितं, तदप्येतादृशशङ्काविधूननायैवेति तत्त्वम् ॥

श्रुतप्रकाशिकायां तु पाराशर्यपदव्याख्यानावसरे "स होवाच-व्यासः पाराशर्यः" इति श्रुतिप्रसिद्धः । तस्यैव बादरायणसंज्ञत्वं विवक्षितम् । यथोक्तं महर्षिभिः—

द्वीपे बदरिकामिश्रे बादरायणमच्युतम् ।
पराशरात्सत्यवती लेभे पुत्रं परंतपम् ॥

इति । यद्यपि ऋष्यन्तरेऽप्यस्ति बादरायणशब्दप्रयोगः । तथापि सूत्रकृद्विषयो बादरायणशब्दः पाराशर्यगोचर एव ॥

तथा च स्कान्दे व्यक्तमुक्तम्—

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किंचित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम् ॥
गौतमस्य ऋषेश्शापात् ज्ञाने त्वज्ञानतां गते ।
संकीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ॥
शरण्यं शरणं जग्मुः नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदान् उज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमंजसा ॥

इति ॥ एतानि स्कान्दपुराणवचनानि प्रथमसूत्रभाष्ये भगवता मध्वाचार्येण समुदाहृतानि सन्ति । तान्येव श्रीसुदर्शनाचार्यैः श्रुतप्रकाशिकायामुदाहृतानीति युक्तं विज्ञातुम्, ततः प्राक्तनप्रबन्धेषु काप्यनुपलम्भात्। तत्त्वटीकामुखाच्च महाचार्येण चण्डमारुते समुदाहृतानि स्युः॥

शतदूषण्यां तृतीये वादे "जैमिनेर्बादरायणशिष्यत्वं महाभारतादिषु प्रसिद्धम्—

सुमन्तुं च महाभागं वैशंपायनमेव च ।
जैमिनिं च महाप्राज्ञं पैलं चापि तपस्विनम् ॥ म ॥ शा ॥ ३२८.

इत्यादिना ॥ नन्वत्र व्यासशिष्यो जैमिनिरित्युक्तं, सत्यं व्यास एवात्र बादरायणः—

द्वीपे बदरिकमिश्रे बादरायणमच्युतम् ।
पराशरात्सत्यवती लेभे पुत्रं परन्तपम् ॥

इति हि स्मर्यते । व्यासव्यतिरिक्तेपि बादरायणसंज्ञा प्रयुक्तेति चेत् तथापि—

तपोविशिष्टादपिवै वसिष्ठान्मुनिसत्तमात् ।
मन्ये ज्येष्ठतमं त्वाऽद्य रहस्यज्ञानवेदने ॥

इति रहस्यतमार्थज्ञापकत्वेन प्रसिद्धिप्रकर्षादेः सम्प्रदायात् अत्र व्यास एव स्वीक्रियते । अत एव श्रीवाचस्पतिमिश्रप्रभृतयोऽपि व्यासमेव ब्रह्मसूत्रकृतमाचख्युः । यथा भामत्यारम्भे—

ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे ।
ज्ञानशक्त्यवताराय नमो भगवते हरेः । इति" ॥

एवंरीत्या व्यासबादरायणयोः अभेदसमर्थनसंरंभावलोकनेन भेदसम्प्रदायोऽपि कश्चित्स्यादित्युल्लिख्यते । तस्य मूलं तु—श्रीमति शाङ्करभाष्ये (२-३-४७) "स्मरन्ति च व्यासादयः" इति भाषितत्वात् तत्र भगवद्गीतामहाभारतादिवचनानामुदाहृतत्वाच्च निर्देशस्वारस्यम् । तथा भास्करीयेपि भाष्ये "स्मरन्तिच, व्यासादय इति शेषः" इति निर्देशोस्ति । अनया च वचोभङ्ग्या सहृदयाः भेदं विजानन्ति केचित् ॥

अथास्मिन् ब्रह्मसूत्रकर्तृविचारे अन्योऽपि कश्चिदभिप्रायः प्रस्फुरति । यथा—श्रीसुरेश्वराचार्यप्रणीतायां नैष्कर्म्यसिद्धौ प्रथमेऽध्याये ९० तमे श्लोके—"यदपि जैमिनीयं वचनमुद्घाटयसि तदपि तद्विवक्षाऽपरिज्ञानादेव उद्भाव्यते। किं कारणं—यतो न जैमिनेरयमभिप्रायः आम्नायस्सर्व एव क्रियार्थ इति । यदिह्ययमभिप्रायोऽभविष्यत् "अथातो ब्रह्मजिज्ञासा, जन्माद्यस्य यतः" इत्येवमादि ब्रह्मवस्तुस्वरूपमात्रयाथात्म्यप्रकाशनपरं गंभीरन्यायसंदृब्धं सर्ववेदान्तार्थमीमांसनं श्रीमच्छा-

रीरकं नासूत्रयिष्यत। असूत्रयच्च। तस्मात् जैमिनेरेवायमभिप्रायः यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यं एवमैकात्म्यवाक्यानामपि अनधिगतवस्तुपरिच्छेदसाम्यादिति"। इति वचनमुपलभ्यते ॥

अस्मिन् संदर्भे जैमिनिराचार्य एव शारीरकशास्त्रकर्तेति स्वरसतः प्रतीयते। अतः संभाव्यते च तादृंशोपि कश्चित् संप्रदायस्स्यादिति ॥

यतः जैमिनिः सामगाचार्यः। छान्दोग्योपनिषद्वाक्यान्येव प्रायः शारीरकमीमांसायां विषयवाक्यान्युपलभ्यन्ते। अन्तिमं चानावृत्त्यधिकरणं छान्दोग्यान्तिमवाक्यविषयकमित्यप्यतिविशदम्। अतः जैमिनीयमपि शारीरकं किंचिदासीत्। यथा आश्मरथ्यकाशकृत्स्नादिप्रणीतं शारीरकमासीदित्यभ्यूह्यते। ततश्च भगवान् वेदव्यासः सर्वं सकलय्य सम्यक् परिष्कृतवानित्यप्यभ्यूहितुं युक्तम् ॥

अत एव छान्दोग्योपनिषदः आचार्यः जैमिनिः सूत्रकर्ता। आत्रेयवंश्यः टङ्काचार्यापरनामा आचार्यः ब्रह्मनन्दी वाक्यकर्तेति संक्षेपशारीरके विज्ञायते। तस्यैव वाक्यस्य द्रमिडाचार्यः भाष्यकृदिति विज्ञायते। एवं सूत्रवाक्यभाष्यकर्तृभिः त्रिमुनिः कश्चित्संप्रदायः प्रवर्तितः। स च सर्वोपनिषत्संप्रदाये अन्तर्भावित इत्युल्लिखन्ति परीक्षकाः ॥

अस्याश्च संभावनायाः सहकारकरः अपरोऽपि संदर्भोऽवधार्यते। यथा द्रमिडभाष्यारम्भः श्रीभाष्यश्रुतप्रकाशिकायां मङ्गलवादे एवमनूदितोऽस्ति "नमः प्रवरगुणैकास्पदाय भुवनकोशस्य गोप्त्रे ब्रह्मणे। नमो जैमिनये वेदरहस्यसंपुटनिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे नमोस्त्वाचार्येभ्यः" इति। अत्र न्यायाचार्यस्य जैमिनेर्नमस्कारः बादरायणाचार्यस्य नाम्नाप्यनुल्लेखः छन्दोगसंप्रदायं सूचयतीति ॥

अन्येतु—नैष्कर्म्यसिद्धिग्रन्थे "यदिह्ययमभिप्रायोऽभविष्यत्" इत्यनन्तरं "बादरायणः" इति पदं अध्याहर्तव्यम्, प्रसिद्धत्वादनुक्तिरिति। अतएव तेनैवाचार्येण प्रणीते बृहदारण्यकवार्तिके (वार्तिकसारे ३२ पु)—

वचसामक्रियार्थानां जैमिनिर्विधिशेषताम्।
यस्माह तत्कर्मकाण्डे ज्ञेयं तद्विषयत्वतः॥
अथातो ब्रह्मजिज्ञासेत्येवं व्यासेन कीर्तनात्।
धर्ममात्रस्य जिज्ञासाविषयो जैमिनेर्मतः॥

इति स्पष्टं दृश्यते। ततश्च व्यास एव ब्रह्मसूत्रकर्तेत्यपि संप्रदायस्संगत इति वदन्ति॥

अस्यच विचारस्य किं प्रयोजनमिति चेत् यदि वेदानां व्याख्याता भगवान् जैमिनिराचार्यः ब्रह्मसूत्रलक्षणस्य शारीरक शास्त्रस्यापि प्रणेता स्यात् तदा औपनिषदानामप्यर्थानां वैदिकत्वप्रसिद्धिः प्रथमं प्रयोजनम्॥

यदि च बादरायणाचार्यः प्रणेता स्यात् तदोभयोरभिप्रायैक्यसमर्थनेन भगवतो बादरायणस्याप्ततमत्वं आचार्यत्वं चेति औपानिषदसंप्रदायस्याने कर्षिसंमतत्वं चेति द्वितीयम्॥

यदिच वेदाचार्येण भगवता व्यासेनैव प्रणीतं परिष्कृतं वा स्यात् वैदिकतमत्वं आप्ततमत्वातिशयः इतिहासपुराणाद्युपबृंहणानुगुण्यमित्यादिकं कृत्स्नमपि सुसंगतं भवतीति तृतीयमित्यादिकमूह्यम्॥

अस्माकमयमाशयः—यदि च जैमिनिः कर्ता बादरायणः प्रवक्ता वेदव्यासः परिष्कर्ता सुमन्त्वादयः पाठयितारः स्युः तदा पूर्वमीमांसायां बादरि बादरायणादिपदप्रयोगाः उत्तरमीमांसायां बादरिबादरायणजैमिनि काशकृत्स्नौडुलोम्यादिपदप्रयोगाश्च तत्तदाचार्याभि-

प्रायप्रकाशकाः शिष्यप्रशिष्यैः क्रियमाणाः सर्वेपि सुसंगता भवेयुरित्यतः अधुनातनैः यौक्तिकैस्संभाव्यमाना आशंकास्सर्वा अपि समाहिता भवेयुरिति सर्वं चतुरश्रम् । उक्तं च तत्त्वटीकायां वेदान्ताचार्यैः—

अथवाऽनादिसिद्धत्वात् स्मृतिसूत्रप्रवाहयोः ।
परस्परगृहीतिस्तु न विरोधाय कल्पते ॥

इति ॥ एतेन सूत्राणामावापोद्वापावुपचयापचयौ च कालेकाले संभाविताविति स्पष्टमंगीकृतं भवति ॥

अतएव कुमारिलभट्टाचार्येण तन्त्रवार्तिके–८० पु. (१–३–२) "मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिः अविच्छिन्नसंप्रदायपण्डितव्यवहारैः प्रवृत्ता । न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः । एतेन न्यायविस्तरं व्याचक्षीत" इति लिखितमस्ति ॥

तथा जयन्तभट्टाचार्येणापि न्यायमंजर्यामेवमुक्तं–५ पु. "जैमिनेः पूर्वं केन वेदार्थो व्याख्यातः । पाणिनेः पूर्वं केन पदानि व्युत्पादितानि । पिंगलात्पूर्वं केन छन्दांसि रचितानि । आदिसर्गात्प्रभृति वेदवदिमा विद्याः प्रवृत्ताः" इति ॥

अतस्सर्वत्र परिष्कारदर्शनादत्रापि परिष्कारवचनं सहृदयहृदयंगममेव भवितुमर्हति ॥

अत एव शतदूषण्यां तृतीये वादे—पूर्वोत्तरमीमांसयोरैकशास्त्र्यप्रस्तावे इत्थमभिहितमस्ति "किं पूर्वकृतप्रासादखण्डविषमांशापनयनेन शेषनिर्माणे तदैक्यं नास्ति? अतः प्रतिसंस्कारेणात्रापि संधानम्" इति । अत्र प्रतिसंस्कारः वेदव्यासस्य स्पष्टमुररीकृतः । तस्मात् परिष्कर्तृत्वेनैव वेदव्याससंबंधः ब्रह्मसूत्रस्येति रहस्यम् ॥

कृष्णद्वैपायनस्य व्यास इति नामापि बहुव्यवस्थाकरणात् प्रसिद्धमित्यत्र न खलु बहु वक्तव्यमस्ति । अथाप्येक वचनमुपन्यस्य विरम्यते—

अष्टादश पुराणानि अष्टौ व्याकरणानि च ।
ज्ञात्वा सत्यवतीसूनुः चक्रे भारतसंहिताम् ॥

इति ॥ अत्र संहितापदं विमृशन्तु विद्वांस इति ॥

(क्रमशः)

## श्रीशारदाम्बायै नमः.

---

कल्याणमूर्तिः करुणालवाला कलाधरोत्तंसकिरीटकोटिः ।
कलावती कांक्षितकल्पवल्ली करोतु कल्याणपरम्परां नः ॥ १
चक्रीकृतोल्लोचशिरःफणीन्द्रफणामणीभासुरतूलिकाढ्ये ।
श्रीमंटपान्तर्मृगराजपीठे विद्योतते नः कुलभागधेयम् ॥ २
ज्ञेयं मुनीन्द्रैश्चिरयोगसिद्धैस्संविन्मयं तत्परदेवतायाः ।
लीलागृहीतं यदुपासकानां ध्येयोपलब्ध्यै विवृणोमि रूपं ॥ ३
शृणोमि वाचं यदि लोचनेन पश्यामि चेत्पादतलेन रूपम् ।
पास्यामि चेदञ्जलिना महाब्धिं कल्पेय देव्या गुणवर्णनाय ॥ ४
तथापि वाचंयमसार्वभौमकृपालवालाप्तवचोभिरम्बाम् ।
स्तोष्यामि किञ्चित्प्रतिभातदृष्टश्रुतानुभूतोरुगुणप्रवाहैः ॥ ५
रत्नावलीकर्बुरितेन्दुरेखापरिष्कृतानर्घ्यकिरीटकोटिम् ।
लावण्यवापीपुळिनायमा न ललाटखेलच्चिकुराळिचक्राम् ॥ ६
उन्निद्रचाम्पेयपरागगन्धि मधुव्रतश्रीमदराळकेशीम् ।
भोगीन्द्रभोगोपमनीलवेणी विषक्तचूडामणिनागपाळीम् ॥ ७
लावण्यकुल्यायितशोणकान्ति सीमन्तरेखाग्रचलल्ललन्तीम् ।
भ्रूचापसंयोजितमारबाणानिभाक्षिलक्षीकृतधातृवक्त्राम् ॥ ८
प्रवर्षकांभोधरकर्यिमाणवर्षोपलस्पार्धिकटाक्षवीक्षाम् ।
हीरप्रभाभासुरचम्पकाभनासाग्रविस्फारिमणिप्रवेकाम् ॥ ९
विकस्वराम्भोरुहकेसराभरदांशुसम्मिश्रितमुग्धहासाम् ।
रदच्छदापाटलकुन्दकोशमाला प्रतिस्पर्धिशिताग्रदन्ताम् ॥ १०

दर्गावळीवादनशोणरत्न-कोणायमानाग्रविलोलहस्ताम् ।
कपोलपाळीमणिदर्पणान्तः स्फुरत्प्रभाविंबितकर्णपूराम् ॥ ११
विसृत्वरस्मेरमुखेन्दुबिम्ब ज्योत्स्नासुधापीनजगच्चकोराम् ।
विपञ्चिकाञ्चत्कलनादभङ्गी विभावनामोदविलोलवक्त्राम् ॥ १२
वक्राब्जनाळप्रतिमान कण्ठमृणाळ कांडायित हीरहाराम् ।
रेखात्रयीसूचित भर्तृभाग्यमांगळ्य सूत्रांचित कंबुकंठीम् ॥ १३
ओष्ठप्रभालक्तकरूषित श्रीकौशेयकूर्पासपिनद्धवक्षाम् ।
सुवृत्तमुक्तावळि कांक्ष्यमाणस्तन्यामृतापीन कुचाब्जकोशाम् ॥ १४
चिरागतानेक सुतावलोक स्रुतस्तन क्षीरकणार्द्रहाराम् ।
अभीष्टदान प्रथितामरद्रु शाखायमानां सलबाहुपाशां ॥ १५
शाणोपलोल्लीढ मणिप्रवेक केयूरवल्लीवलयांगुळीयाम् ।
प्रपन्नलोकाभयदान मुद्रापुस्ताक्षमालां कुशपाशहस्ताम् ॥ १६
वैडूर्यशोणोपलहीर नीलप्रत्युप्त हेमांगदकंकणाढ्याम् ।
ताटंक शोणोपल बीजपूर बीजभ्रमोत्कंठकराग्रकीराम् ॥ १७
आपीनवक्षोरुहभार भुग्नवळित्रयीपात पिनद्धमध्याम् ।
सुवर्ण कांचीमणिसूत्रनद्धस्पर्शानुमेयांबरगूढगुच्छाम् ॥ १८
रत्न प्रवेकांचितनूपुराग्र मणिप्रभापिंजर पादपद्मां ।
शरत्प्रसन्नेंदु कलाभिराम नखांशुविद्रावितहार्दतापां ॥ १९
प्रतप्तजांबूनद कायकांतिच्छटापि शंगीकृतसौधमालां ।
अत्यंत सीमांत विभाग रेखाप्रमाणदंडायितगात्रयष्टिं ॥ २०
शीतांशुताराळि तुषारहीर निभोत्तरासंगसमृद्धशोभां ।
सर्वज्ञताध्यापन लब्धवर्णप्रसाददाना दतपक्ष्मळाक्षीं ॥ २१
जगत्रयापत्यसप्रीति मोदपर्याप्तवक्षोरुह पूर्णकुंभां ।
लोकत्रयी संवननप्रयुक्त यंत्रोपमासेचनवक्त्रबिंबां ॥ २२

सांसिद्धिकागंतन्न कांतिपूरत्तुरंगारिंगत्तरळांगशोभां ।
निजांग संसर्गविशेषरम्यदुकूल रत्नाभरण प्रसूनाम् ॥ २३
पूर्णेंदु कल्लोलितदुग्ध सिंधुफेनायमानांबर संवृतांगीं ।
भेदभ्रमोन्मूलनदक्षतत्व विज्ञानमुद्रांञ्चितपाणिपद्माम् ॥ २४
मृणाळसूत्रीविशदोपवीत मुक्ताक्षमालाकनकाळुरम्याम् ।
भ्रूवल्लरीकोमलकन्दकल्प काश्मीरपङ्कार्द्रतमालपत्राम् ॥ २५
सिन्दूरपाळी सुषुमानुषङ्ग किर्म्मीरकालागरुचैत्रकाढ्याम् ।
विरिञ्चिनेत्राष्टकपीयमान सौन्दर्यपीयूषमुखेन्दुलक्ष्मीम् ॥ २६
ध्यानायनं यच्चजगद्गुरूणां क्षेमायनं भक्तिपरायणानाम् ।
रसायनं धातृविलोचनानामेकायनं नश्शरणागतानाम् ॥ २७
भक्तावळीमानसराजहंसी श्रीचक्रराजाश्रितदिव्यमूर्तिम् ।
श्रीशृंगशैलेन्द्रविहारलोलां श्रीशारदाम्बां सततं स्मरामि ॥ २८
श्रीह्रीमतीमन्दवखण्डचूडः दयारसक्लिन्नविलोचनान्ताम् ।
चकोरसाहित्यनिदानवक्रां स्मरामि भक्तेष्टदकल्पवल्लीं ॥ २९
ताळीपलाशाञ्चितकर्णजाहा काश्मीररेखोज्ज्वलफालमूला ।
निशाह्वयाचूर्णविमृष्टगंडा धातुःपुरंध्री हृदि सन्निधत्ताम् ॥ ३०
प्रतिष्ठितां श्रीगुरुशंकरार्यैः समर्चितां संयमिसार्वभौमैः ।
तपोभिरेषां सुसमिद्धशक्तिं स्थाने श्रुतिस्त्वां गुरुमूर्तिमाह ॥ ३१
नारायणोरस्थलगोहिनीति विरिञ्चिवक्त्राब्जकुटुंबिनीति ।
श्रीकंठवामांगवशंवदेति यथाभिलाषं समुपासते त्वाम् ॥ ३२
श्रुत्वा स्वरासि प्रकृतिः पदेषु वाक्येषु हेतुः प्रमितिः प्रमाणे ।
क्रियाफला तत्प्रातिभूस्त्वमेव सर्वात्मना व्याप्य विभासि विश्वं ॥ ३३
कल्या प्रदुग्धे चतुरः पुमर्थान् हिंसा च घोरा मुषती विधत्ते ।
शक्तिद्वयी तेऽम्ब निसर्गसिद्धा नवाम्बुदस्येव सुवृष्टिवज्रे ॥ ३४

यां ते प्रतिष्ठेति कला प्रसिद्धा भूमौ यया व्याप्तमिदं समग्रं
तयैकया विश्वमिदं बिभर्षि विश्वंभरां त्वां हृदि भावयामि ॥
मातश्चतुष्षष्टिकलाभिरेतच्चराचरं विश्वमनुप्रविश्य ।
त्वमेव तच्चेतयसीह सर्वचैतन्यरूपां शरणं प्रपद्ये ॥
विद्येत्यविद्येति च यत्स्वरूपे मोक्षाय बन्धाय च हेतुभूते ।
लीला तवैवाम्ब नचेत्कुतोवा तमःप्रकाशौ सहयोगिनौ स्तः
याश्शक्तयस्सर्गविधौ विधातुरुच्चावचाः कारणतां प्रसन्नाः ।
तासां परासां च समष्टिरूपामम्बामहं भावनयाऽवलंबे ॥
अव्याकृतं पूर्वमिदं समग्रं तत्तद्विशेषग्रहणाय नाम्ना ।
तद्व्याकरोस्त्वं वचसां सवित्रे तत्त्वां विना चेतयते न किंचित्
ऋचा नुवाकेन च सामशस्त्रैर्विधिप्रयोगान् विविधान्विधाय ।
ददासि लोकद्वयसौख्यमेषां तां वाङ्मयीं शान्तिकलामुपासे ॥
सुधासवर्णां तरुणारुणाभामाराध्य केचिद्वृणुते स्वकामान् ।
जुषंति भोगान्विहितान् त्वयैव ते वंचितास्त्वन्महिमानभिज्ञाः
संविन्मयीं त्वां समुपासते ये संवित्स्वरूपाः खलु त भवन्ति
श्रद्धामयोयं पुरुषश्श्रुतश्च कीटोपि पेशस्करतां प्रयाति ॥
सेवालसोहं न च कामकामी सेवार्थिनी त्वं नहि पूर्णकामा
नैवावयोस्सेवकसेव्यभावस्तद्भेदहानौ किमुशिष्यते सा ॥
ब्रह्माहमस्मीति निदर्शयंतु गवेषितं तैरपि तावदेव ।
तस्यापि चैतन्य मुपानयंतीं चिद्रूपिणीं त्वामहमित्यवैमि ॥
दयांबुधिं त्वां जननीति मत्वा विधूयगर्वाज्जननीतिमंब ।
अत्याचरं धर्मपथं च मूढो मामुद्धरेति प्रलपन्नलज्जे ॥
त्वत्पादपंकेरुहदासमेनं नैवप्रतीकर्तुमलं सुरा वा ।
इति प्रमत्तः करवाणि पापं यशस्त्वकीयं परिरक्ष मा वा

न प्रार्थिता मे सुरराजलक्ष्मीर्नवांछितं वा भुवनाधिपत्यम् ।
इयन्मया प्रार्थितमेव देहि तवांब पादांबुरुहस्य दास्यं ॥ ४७
बालस्य मूकस्य जडस्य चापि दयांबुराशे दयसे त्वमंब ।
मामेडमूकं समुपेक्षसे किं विशृंखला ते प्रभुता धरित्र्यां ॥ ४८
मातुर्दयापात्रमहं भवेयं परुत्परार्यैषम इत्यवेक्ष्य ।
इयंति वर्षाण्यतिवाहितानि फले विलम्बः किमभाववादः ॥ ४९
अनुग्रहं वा मयि निग्रहं वा यत्कर्तुकामासि कुरुष्व तूर्णं ।
द्वयेपि तस्मिन्विहिते त्वयैकः सूतेत्रिवर्गंत्वपरोपवर्गः ॥ ५०
त्वय्यर्पिते कर्मणि तत्फले च मांमाविकुर्यादिति निव्रृतेपि ।
सा वासना मां नजहाति किं तत् त्वया गृहीतन्नु समुज्झितं नु ॥५१
उपासनाभिर्दहरात्मविद्याविशेषविज्ञाननिवर्तिताभिः ।
प्रीणासिचेत्त्वं तदबोधयंत्या त्वयैव मातर्ननु वंचितास्म्मः ॥ ५२
गुरूपदेशैर्निगमावबोधैस्सतां चरित्रैर्मनसः प्रसादैः ।
निश्चप्रचंते करुणामयी त्वं कथं मृषोद्यं तादिति प्रतीमः ॥ ५३
नापेक्षसे त्वं विधिवत्सपर्यां न योगसिद्धिं न दृढां च भक्तिं ।
सकृत्प्रणामांजलिनैव तुष्टा तनोषि कल्याणपरंपरां नः ॥ ५४
स्मृतापि तापत्रयदारिणीति कृतापराधेपि दयामयीति ।
मत्वा शरण्यां शरणागतोहमीदृग्गुणान्या क्व च वा वदान्या ॥ ५५
शोणाश्मनीकाशतनुप्रकाशां विकोशितश्यामकुशेशयाक्षीं ।
दिशामहेशाश्रितपाददेशां स्मरामि कामेश्वरकोशनाथां ॥ ५६
एणीनिभाक्षीं करुणांबुराशिद्रोणीकृतापांगझरीं पुराणीं ।
श्रोणीतटालंबितचारुवेणीं वाणीं भजे मोहलताकृपाणीं ॥ ५७
वीटीरसीपाटलदंतवाटी चेटीकृताशेषसुपर्वकोटी ।
पाटीरगौरा त्रिजगन्नटीयमाटीकतां चेतासि वाग्वधूटी ॥ ५८

कूराग्रसंलालितराजकीरान् प्रालंबिमुक्ताफलतारहारान् ।
गिरांविदूरान्निगमांतसारान् समाश्रयामो विविधमंदारान् ॥ ५९
श्रीशारदेति चतुरास्यकुटुंबिनीति वाग्वादिनीति वरदेति च नामपंक्तौ ।
एकैकमेव निखिलार्थकरं तदन्यदाम्रेडितं हि चारितार्थपदेषु रूढम् ॥ ६०
बालार्कपाटलमरीचलसद्दुकूलां लीलास्मितद्विगुणमौक्तिकरम्यमालां ।
वेलातिलंघितदयोर्मिलनेत्रखेलां बालां नमामि कुटिलालकशोभि-
फालाम् ॥ ६१
धात्री समस्तजगतां दुरिताब्धियानपात्री समग्रनिगमांतगिरां सवित्री ।
दात्री त्रिवर्गविभवस्य दयासुधायाः पात्रीकरोतु हृदि मां सुकृतस्य
गोष्ठी ॥ ६२
अभ्यर्चितासि विनुतासिनतासि मातरुष्टासिकांसमवलंब्यनिरीक्षितासि।
जानासि मामशरणं फलदासि नूनं काले दयस्व समयासफलं सखाय॥
निखिलभुवनरक्षा दक्षिणा नेक्षसे मां ।
व्यवहितनिकटस्था न प्रलापं शृणोषि ॥
मयि ननु कुलदासे यद्युपेक्षां कृषीष्टाः ।
भवतु मम हि चेतस्त्वस्मृतिं नैव जह्यात् ॥ ६४
सरसललितसूक्तैः फुल्लमल्लीमतल्ली ।
विगलितमकरंदस्फारमाधुर्यसिक्तैः ॥
कृतनुतिरतिवेलं जातचेतःप्रसक्तिः ।
श्रुतिविततिसावित्रीं शारदां संस्मरामि ॥

कुक्के. सुब्रह्मण्यशास्त्री.

## संस्कृतमहापाठशाला वृत्तान्तः

---

श्रीमद्विभववत्सरीयाश्विनकृष्णषष्ठ्यां वर्षान्तविरामसमनन्तरं महापाठशाला पुनरुद्घाटिता । तदात्वे श्रीविद्यागणपतिस्वामिमहासन्निधाने सम्मिलितेषु विद्वत्सु विद्यार्थिषु च महापाठशालाध्यक्षाः श्रीयोगनरसिंहार्याः एवं बभाषिरे—

भो भो स्सरस्वतीप्रासादमहापाठशालीयाः छात्राः! नत्वा नारायणं, अभिवाद्य गुरून् अद्य प्रस्तौमि किंचिदिदम् । तत्सावधानं श्रोतुं, मन्तुं, ध्यातुं, अनुष्ठातुं चार्हन्ति भवन्तः ॥

"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति गीता किल भगवता गीतासु । "ज्ञानविहीनस्सर्वमतेन मुक्तिं न भजति जन्मशतेन" इत्याचार्योक्तिश्चेह स्मृतिपथमधिरोहति । ज्ञानमेवं परमं पवित्रं चेत् तत्संपादनैकप्रयोजनेयं महापाठशाला अपि परंपवित्रा संस्था । तेन भवन्तः अत्र कायमलं, वाङ्मलं, मनोमलं च दूरीकर्तुं सर्वात्मना यतन्ताम् । सच्छिष्यगुणान् सम्यगभ्यस्य गुरुवरकरुणापाङ्गाद्गौरवमासाद्य माद्यन्तु भवन्तः । गुरुविषये सद्भक्तियुताः विनीताः सुशीलाः ज्ञानाधिगमयोग्या भवेत यूयं । सम्यग्ज्ञानाधिगमे शीलं निदानम् । तस्मात्पाठशालायाः प्रथमं प्रयोजनं शीलम् । ज्ञानाधिगमस्तु शीलद्वारैव ॥

महापाठशालीयानां भवतां शीलाभ्यसनं सुकरमेव । अत्र गुरुवर्गे अगाधविद्यापारदृश्वानः अकलङ्कशीलाः दिगन्तविश्रान्तकीर्तयः पण्डितप्रकाण्डाः विराजन्ते भवतां पुरतः । तान् सम्यङ्निर्वर्ण्य

ये गुणा उपादेयाः ते यस्मिन् गुरौ दरीदृश्यन्ते तं गुरुं शीलेनानुकुरुत। अत्र महापाठशालायां अध्यापकवरेण्याः न शिष्यवित्तापहारकाः किन्तु केवलं शिष्यहृत्तापहारकाः केवलं शिष्यहितकाम्यया प्रवर्तन्ते ॥

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ॐ शान्तिश्शान्तिश्शान्तिः ॥**

इत्यस्य- महामन्त्रस्यार्थः अत्र मूर्तिमान् चरति अहमस्मीति ॥

श्रीमन्नारायणापरावतारस्य श्रीमन्महाराजस्य दयया भारतवर्षीय महापाठशालासु इयं प्रथमवर्गे परिगण्यते। ये अत्र शिष्यत्वेन विराजन्ते ते धन्यतमाः। अतः विद्यमानायां समग्रायां ज्ञानशीलाधिगमसामग्र्यां बुद्धिमान् पूर्वे वयसि कुर्वीत तद्यदुत्तरत्रापेक्ष्यते ॥

प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि ॥

अद्य महापाठशालायां नवसंवत्सरारम्भः। चैत्रादिर्नववत्सरः पंचांगे न तु पाठशालायाम्। अद्यप्रभृति कार्याणां श्रीमच्छुक्लसंवत्सरीय परीक्षोन्मुखत्वात्, अद्यैव शुक्ल संवत्सरारंभः। प्रातिनवसंवत्सरारम्भे चिकीर्षितस्य विद्याशीलाद्यभ्यसनस्य संकल्पो धृढतरोऽवश्यकः। अद्यसंकल्पन्तां भवन्तः। ये विद्वत्परीक्षासु विद्यार्थिपरीक्षासु चोत्तीर्णाः ते निसर्गतः हृष्टा एव भवन्ति। ये तु अनुत्तीर्णाः तेषामध्ययनकर्माणि कयाचिन्न्यूनतया भवितव्यम्। तां न्यूनतां परिहृत्य भद्रं वितरत्वित्यभ्यर्थयन्तां भवन्तः श्रीविद्यागणपतिस्वामिनम्। अकारणपरमवत्सलस्वभावः भगवान् भद्रं वितरति ॥ इति ॥

---

# विभवसंवत्सरीयाश्विन शुक्लद्वादश्यां श्रीमन्महाराज महासंसदि विद्वत्परीक्षासूत्तीर्णानामनुगृहीतसम्भावनाप्रकारः.

| संख्या | नामधेयम् | शास्त्रनाम | अध्ययनस्थलम् | संमान रूप्याणि | विशेष. |
|---|---|---|---|---|---|
| | **मध्यमपरीक्षा.** | | | | |
| | प्रथमवर्गः. | | | | |
| 1 | नारायणः ... | कृष्णयजुर्वेदः ... | मैसूरु महापाठशाला ... | 50 | |
| 2 | वेङ्कटसुब्रह्मण्यः ... | „ ... | ... | 50 | |
| 3 | पि. आर्. रंगनाथघनपाठी ... | „ .. | पेरुवेंव ... | 50 | |
| 4 | परांकुशाचार्यः ... | „ ... | बेंगळूरु वेदमहापाठशाला .. | 50 | |
| 5 | रामचन्द्रघनपाठी ... | „ ... | माणक्काल् ... | 50 | |
| 6 | वैद्यनाथघनपाठी ... | „ .. | जम्बुकेश्वरम् ... | 50 | |
| 7 | वेङ्कटसुब्रह्मण्यशर्मा ... | „ ... | कल्पाति ... | 50 | |
| 8 | धर्मलिङ्गघनपाठी ... | „ ... | माणक्काल् ... | 50 | |

| सङ्ख्या | नामधेयम् | शास्त्रनाम | अध्ययनस्थलम् | सम्मानद्रव्याणि | विशेषः |
|---|---|---|---|---|---|
| 9 | वेङ्कटरामशास्त्री ... | कृष्णयजुर्वेदः ... | तिन्नवेल्लि ... | 50 | |
| 10 | जम्बुनाथघनपाठी ... | ,, ... | नल्लिच्चेरि . | 50 | |
| | | (द्वितीयवर्गः.) | | | |
| 11 | विद्वान् कृष्णघनपाठी .. | वेदभाष्यम् ... | मैसूरु महापाठशाला .. | 50 | |
| 12 | बि. आदिशेषभट्टः ... | ज्यौतिषम् . | ,, .. | 50 | |
| 13 | बि. अनन्तकृष्णोपाध्यायः ... | नव्यन्यायः | उडुपि ,, ... | 50 | |
| 14 | पुरोहित नंजुंडशास्त्री . | ,, .. | मैसूरु महापाठशाला .. | 50 | |
| 15 | पि. गुरुराजाचार्यः . | द्वैतवेदान्तः ... | ,, ... | 50 | |
| 16 | चक्रवर्ति कस्तूरिरङ्गनाथाचार्यः. | साहित्यम् .. | ,, ... | 50 | |
| 17 | पं. नंजुंडशास्त्री ... | ,, ... | ,, ... | 50 | |
| 18 | के. मुदुकृष्णशर्मा ... | ,, ... | चिदम्बरम् .. | 50 | |
| 19 | एच्. हरिभट्टः ... | ऋग्वेदः ... | मैसूरु महापाठशाला ... | 40 | |
| 20 | नारायणशर्मा ... | शुक्लयजुर्वेदः ... | वैगनल्लूरु ... | 40 | |
| 21 | अरुणाचलघनपाठी ... | कृष्णयजुर्वेदः ... | जम्बुकेश्वरम् ... | 40 | |
| 22 | रामवाध्यार् ... | ,, ... | अनन्तशयनम् ... | 40 | |

| | | | | | |
|---|---|---|---|---|---|
| 23 | गणेशघनपाठी | कृष्णयजुर्वेदः | माणकाल् | 40 | |

उत्तम परीक्षा

(प्रथमवर्गः)

| | | | | | |
|---|---|---|---|---|---|
| 24 | सु. नारायणसामिशास्त्री | अद्वैतवेदान्तः | मैसूरु महापाठशाला | 125 | रङ्गवस्त्र-द्वयम् |
| 25 | विद्वान् नटेशघनपाठी | कृष्णयजुर्वेद चयनान्त श्रौतम् | ,, | 75 | ,, |
| 26 | के. एस्. सोमेश्वरय्यर | सामवेद चयनान्त-श्रौतम् | ,, | 75 | ,, |

(द्वितीयवर्गः)

| | | | | | |
|---|---|---|---|---|---|
| 27 | विद्वान् बाळेबैल् पद्मनाभाचार्यः. | नव्यन्यायः | मैसूरु महापाठशाला | 100 | |
| 28 | विद्वान् काशि प्राणेशाचार्यः | प्राचीनन्यायः | ,, | 100 | |
| 29 | विद्वान् रायदुर्गं भीमसेनाचार्यः. | द्वैतवेदान्तः | ,, | 100 | |
| 30 | नाविल्पाक्कं श्रीनिवासगोपालाचार्यः | साहित्यम् | ,, | 100 | |
| 31 | कुंभकोणं नागराजाचार्यः | ,, | ,, | 100 | |
| 32 | सोमनहळ्ळि सुब्बरायः | ,, | ,, | 100 | |
| 33 | विद्वान् के. पि. नारायणशास्त्री | ,, | बेंगळूरु, स्वव्यासङ्गः | 100 | |

| संख्या. | नामधेयम | शास्त्रनाम | अध्ययनस्थलम् | संमान रू | विशेष· |
|---|---|---|---|---|---|
| 34 | के. एस्. नरसिंहशास्त्री .. | साहित्यम् ... | चिदंबरं ,, | 100 | |
| 35 | अळयवल्लि वीरराघवाचार्यः | ,, ... | मैसूरु महापाठशाला . | 100 | |
| 36 | वेङ्कटरामन् ... | ऋग्वेद चयनान्त श्रौतम् .. | ,, . | 60 | |
| 37 | यज्ञरामघनपाठी ... | कृष्णयजुर्वेद सलक्षण घनान्तम् .. | ,, . | 100 | |
| 38 | शिवरामकृष्णशर्मा ... | शुक्लयजुर्वेद सलक्षण घनान्तम् | वैगनल्लुरु पाठशाला .. | 60 | |
| 39 | वैद्यनाथशर्मा .. | ,, . | ,, ... | 60 | |
| 40 | कलियूरु रङ्गण्णः ... | सामवेद चयनान्त श्रौतम् .. | मैसूरु महापाठशाला . | 60 | |
| 41 | विद्वान् रामचन्द्रदीक्षितः ... | | ,, . | 60 | |

## विभववत्सरीय विशेषपारितोषिक प्रदानप्रकारः.

| संख्या | पारितोषिकनामानि | पारितोषिकविषयः | पारितोषिकभाजः |
|---|---|---|---|
| 1 | श्री श्री कांची कामकोटि पारितोषितम् .... | अद्वैतवेदान्तः .... | सु. नागयाणसामिशास्त्री .... |
| 2 | धर्माधिकारि कुणिगल्लु रामाशास्त्रिणां पारितोषिकम् .... | ” .... | ” ... |
| 3 | मुसाहेब् गङ्गाधरराव् सुवर्णाभरणं .... | ” ... | ” ... |
| 4 | आर्काडु श्रीनिवासाचार्लु वीर शृङ्खलम् .... | वेदान्तः ... | ” ... |
| 5 | पं. जि. कृष्णस्वामिराव् सुवर्णाभरणम् ... | विशेषप्रावीण्यम् ... | ” ... |
| 6 | पटेल् हुच्चवारेगौड सुवर्णाभरणम् .... | वेदान्तः .. | ” .. |
| 7 | वेळवाडि रामस्वामय्य सुवर्णाभरणम् ... | अद्वैतवेदान्तः | ” .... |
| 8 | राजसभाभूषण कर्पूर् श्रीनिवासराव् पारितोष्किम् .. | नवीनन्यायशास्त्रम् ... | विद्वान् वाळेवेल पद्मनाभाचार्यः |
| 9 | वेदान्तं कृष्णमाचार्य पारितोषिकम् .... | वेदान्तः ... | ” ... |
| 10 | धर्माधिकारि पण्डितरत्नं तर्कतीर्थ कस्तूरिरङ्गाचार्य पारितोषिकम् .... | तर्क–विशिष्टाद्वैतम् . | विद्वान् काशी प्राणशाचार्यः |
| 11 | महाविद्वान् तिरुवळ्ळूरु श्रीनिवासराघवाचार्य पारितोषिकम् .... | विशिष्टाद्वैत वेदांतः .... | .... |

| संख्या | पारितोषिकनामानि | पारितोषिकविषय· |
|---|---|---|
| 12 | पेरिस्वामि तिरुमलाचार्य पारितोषिकम् .... | साहित्यम् |
| 13 | रेजिमेंट्दार् कृष्णराव्पारितोषिकम् .... | द्वैतवेदान्तः |
| 14 | आर्काडु भीमसेनराव्–गोदावरम्म श्रीवेङ्कटेश्वर नाम्माङ्कित पारितोषिकम् .... | ,, |
| 15 | राजकविभूषण एच्. लिङ्गराज अरसु पारितोषिकम् .... | कविता |
| 16 | धर्मप्रवृत्त धर्माधिकारि नवीनं रामानुजाचार्य पारितोषिकम् .... | वेदः |
| 17 | लोकसेवानिरत–अंवळे–अण्णय्य–पंडित पारितोषिकम् .... | स्मार्तप्रयोगः |
| 18 | अरमने–खास् ऋत्विक्–गोमठं श्रीनिवास जोस्य सुवर्ण हस्ताभरणम् .... | वेद–वेदान्तः |
| 19 | धर्माधिकारि चक्रवर्ति अय्यंगार्य पारितोषिकं | साहित्य–व्याकरणं |
| 20 | हेब्बळलु सुब्बय्यपारितोषिकम् .... | मीमांसा–धर्मशास्त्रम् |
| 21 | मुळबागिलु श्रीप्रेक्षानिधिस्वामिनां पारितोषिकम् .... | द्वैतवेदान्तः |

| | पारितोषिकभाज· |
|---|---|
| .... | सोमनहल्लिळ सुब्बरायः |
| .... | विद्वान् आ भीमसेनाचार्यः |
| .... | ,, |
| .... | विद्वान् के. पि. नारायणशास्त्री |
| .... | यथानियमं पारितोषिकाधिगमार्हाभावात्तथैव निक्षिप्तान्येतानि |
| .... | |
| .... | |
| .... | |
| .... | |
| .... | विद्वान् आर्. भीमसेनाचार्यः. |

योगनरसिंह्मार्यः,

विद्वत्परीक्षामहासभाकार्यदर्शी.

सधन्यवादमस्माभिरङ्गीकृता एताः
विनिमयरूपः पत्रिकाः

---

१. रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना.
२. जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रास्.
३. प्रबुद्धकर्णाटक, बेंगळूरु.
४. मिथिक् सोसाइट जर्नल्, बेंगळूरु.
५. यूनिवर्सिटि यूनियन् म्यगसीन, मैसूरु.
६. एम्. टि. बि. आर्ट्स्कालेजुम्यागजीयन्, सूरत.
७. ओरियंटल् कालेजु म्यागसीन, लाहोर्.
८. सद्बोधचन्द्रिके, आनन्दवन.
९. श्री शारदा, शृंगेरि.
१०. कादम्बरीसंग्रह, चामराजनगर.
११. सनातनधर्मसंजिविनी, मैसूरु.
१२. कर्णाटक चन्द्रिके, मैसूरु.
१३. उद्यानपत्रिका, तिरुवादि.
१४. सुप्रभातम्, काशी.
१५. सुविचारिणी, बेंगळूरु.
१६. वै. एं. एं. ए. पत्रिका, मल्लेश्वरं, बेंगळूरु.
१७. ग्रामजीवन, लक्ष्मीपुरं, मैसूरु.
१८. आन्ध्रसाहित्य पत्रिका, काकिनाड.
१९. विश्वकर्णाटक, बेंगळूरु.
२०. तायनाडु, मैसूरु.
२१. मञ्जुभाषिणी, काञ्चीपुरम्.
२२. सूर्योदयः, काशी.
२३. उद्योतः, लाहोर्.

# Some Useful Books for Sale!!

| | Rs. | A. |
|---|---|---|
| श्रीकृष्णविलासकाव्यम् - विलासिन्याख्यया व्याख्यया समेतम्. A well known poem in simple & Charming style .... ... | 0 | 10 |
| Do Glazed paper . .... | 0 | 12 |
| नैषधकाव्यरत्नम्—मल्लिनाथसूरिविरचित जीवातु-समाख्यव्याख्यासहितम् 1—6 सर्गाः .. | 1 | 8 |
| Do Library Edition . | 2 | 0 |
| Do 7—12 सर्गाः. . | 1 | 12 |
| Do Library Edition | 2 | 0 |
| वैदिकसाहित्यचरित्रम्—A History of Vedic Literature This is the first Book of its kind in Sanskrit. Just Published | 2 | 4 |
| Do Library Edition .. | 3 | 12 |
| प्रश्नमार्गः (टिप्पण्यापरिष्कृतः) A foot-path to; the Prasna & Jataka parts of Astrology the best book of its kind that exists at present | 3 | 0 |
| Do Library Edition ... .... | 4 | 0 |
| नित्याह्निकम्-सस्वरम्—The daily rites of every Brahmin. | 0 | 1 |
| संस्कृतबालादर्शः—By K. L. V. Sastri ... | 0 | 4 |
| संस्कृतप्रथमादर्शः सचित्रः Do ... | 0 | 6 |
| शब्दमञ्जरी अव्यय-समासप्रकरण-धातुमालिका सहिता With very useful foot-notes . . | 0 | 5 |
| Do Glazed Edition. | 0 | 6 |

These books are approved by the Madras and Mysore Text Book Committes.

Discounts will be allowed on large orders. For further particulars Apply to:—

R. SUBRAHMANYA VADHIAR,
Bookseller & Publisher, Kalpathi-Palghat.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

## सम्पादकीयसमितिः

(अभिनवा)

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए. विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः, डाक्टर् आर् शामशास्त्रिणः बि.ए., पिएच्. डि., एं. आर्. ए. एस्. मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारि महाविद्वान् ब्र. श्री. काशी शेषवेंकठाचलशास्त्रिणः

५. महामहोपाध्याय पण्डितरत्नं ब्र. श्री लक्ष्मीपुरं श्रीनिवासाचार्याः महापाठशाला विशिष्टाद्वैत वेदान्त प्रधानोपाध्यायाः

६. महामहोपाध्याय विद्यानिधि ब्र.श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्त प्रधानोपाध्यायाः

७. महाविद्वान् ब्र. के. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगानरसिंहार्याः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल्. हरियप्पार्याः, एं.ए., महापाठशालोपाध्यायाः

---

## सूचना

" मानमेयरहस्यश्लोकवार्तिकम् "

इति नाम कश्चिन्महाप्रबन्धः आनुष्टुभश्लोकरूपेण संगृहीतः सर्वसिद्धान्तसारसंग्रहरूपः परस्सहस्रविषयविभक्तः महामहोपाध्याय पण्डितरत्नं इत्याद्यनेक बिरुदाङ्कितैः श्रीमद्भिः लक्ष्मीपुरं श्रीनिवासाचार्यैः प्रणीतः मुद्रितः प्रकाशितश्चास्ति। मूल्यमस्य (६) षट् रूपकाणि. प्रापणभृतिः पृथगेव.

उपलब्धिस्थानं—ग्रन्थकर्ता, मैसूरु.

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुरागकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3 s.*) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्.)

संपुट ५] एप्रिल १९२९ [सञ्चिका-२

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमश्शान्ताय तेजसे ॥ १

गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषास्सुरत्वात् ॥ २

कर्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मरूपे ।
अवाप्य तां कर्ममहीमनन्ते
तस्मिल्लयं ये त्वमलाः प्रयान्ति ॥ ३

जानीम नैतत् क वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्याः
ये भारते नेन्द्रियविप्रहीनाः ॥ ४

(विष्णुपुराणम्.)

# सम्पादकीयम्.

ऐषमीय जनवरि मासादौ सम्पादकीयसमितिः महापाठशालाधिकारिभिः नवीकृता। वर्षचतुष्टयं महता सामर्थ्येन महापाठशालापत्रिकां सम्पादितवतां श्रीमतां महामहोपाध्यायपण्डितरत्न-इतिबिरुदाङ्कितानां लक्ष्मीपुरं श्रीनिवासाचार्याणां अस्माकमभिनन्दनं मुदा समर्पयामः।

सम्पादकीयसमिति-
व्यत्ययभविष्ट

प्रतिनवाया सामत्याममि त अपरे च विद्वद्वरिष्ठमहोदयाः सन्तः यथापूर्वमेव ग्राहकसहृदयहृदयोल्लासं तन्तनति। पत्रिकापुत्रिकेयं तुरीयमपि वत्सरं निष्प्रत्यूहं व्यतीय पञ्चमसंवत्सरोत्सवसुखमनुभवितुमुचुङ्क्ते भगवदनुग्रहबलेन श्रीमन्महाराजदयारसबलेन चेति सर्वेषां सुरसरस्वतीसेवनरसिकानां परं संमोदस्थानम्। कल्याणानां प्रसूतिः मन्दहासवदनः परमात्मा परमवत्सलस्वभावः अस्मत्पत्रिकायै सकलसन्मङ्गलान्यातनोतु।

महत्त्वाद्भारवत्त्वाच्च लोकग्रन्थेषु अतिपृथु श्रीमन्महाभारतम्। तच्च भारते वर्षे अनेकासु विभिन्नमातृकासु बहुरूपं दृश्यते। प्रतिमातृकं विभिन्नविषयत्वादुदेतीयं नैसर्गिकी-जिज्ञासा किमियं मातृका प्रामाणिकी? किमयं पाठस्साधुः? मातृकासु का पुराणी? का वा नवा? सर्वमातृकाणां जनयत्री का? सा किंरूपा इति। मुद्रितपुस्तकान्यपि परस्परं भिद्यन्ते। एवं मुम्बापुरीकुम्भघोणपुस्तकयोरस्ति महान् विशेषः। इत्थमनियते श्रीमन्महाभारतस्वरूपे, श्रीव्यासहस्तालङ्कारभूतमादिमं श्रीमन्महाभारतं निर्धार्य

पुण्यपत्तने श्रीमन्महा-
भारतस्य शोधनपूर्वक-
सचित्र मुद्रणम्

स्वरूपतस्समुद्धर्तुमर्जुनमिश्रदेवबोधनीलकण्ठीयादिपाठसमुल्लसितानि वङ्ग-त्रिलिङ्गमैथिलमलयालनेपालनागरादिलिपिनिबद्धानि सर्वतो विद्यमानानि पुस्तकानि बहुधा विमृश्य पुण्यपत्तनीय श्रीभण्डारकरनामाङ्कित-प्राच्यविमर्शकसमित्या विद्वन्मणयः श्रीमन्महाभारतम् सकूलङ्कष-विमर्शं प्रकाशयन्तो विजयन्ते । द्वे सञ्चिके अस्माभिरुपलब्धे; द्वे अपि षष्ट्यधिकमातृकासाहाय्येन संशोधिते; द्वे अपि चित्रक-लाकोविदस्य औन्धदेशाधिराजस्य चित्रकर्मणश्च प्राच्यकलातन्त्रानु-सारिणा परिष्कृते । समवसिते संशोधने प्राकाश्यं च नीते ग्रन्थरत्ने महान्खलु लोकोपकारो भविष्यति । शर्मण्य-देशीयेन श्रीमोक्षमूलभट्टेन श्रीसायणभाष्यसनाथीकृतायाः ऋग्वेदसंहितायाः प्रकाशनेन यावानु-पकारो निर्वृत्तः तावानेवोपकारो विशुद्धपञ्चमवेदस्य प्रकाशनेनापि कृतस्समुज्जृम्भेत इत्यत्र नास्ति द्वापरः । अथवा, तस्मादप्यधिकएवौ-तदुपकार इत्यप्युच्यताम् —यतः पूर्वं भारतेयग्रन्थरत्नं ऋग्वेदः केनचन पाश्चात्यविपश्चिता मुद्रापितः; अद्यतु तथाभूतमेव अन्यद्ग्रन्थरत्नं भारते-यैरेव विबुधवरेण्यैः संशोधनदशामनीयत इत्यहो नव्यभारतेयवैदुष्यप्रा सादस्य प्रथमेष्टकान्यासः ॥

अद्यावधिकृतसंशोधने, आदिपर्वणि विद्यमाना ब्रह्मगणेशा-ख्यायिका प्रक्षिप्तेति परिज्ञायते; अतः मुद्रितपुस्तके समुज्झिता भवति । पर्वाणि पर्वाणि विद्यमानश्लोकसङ्ख्यासमर्थनञ्च सम्पादि-तम् । इत्थमनेकसूरिभिः कृतं दीर्घसंशोधनं किं किं न दर्शयति?

शोधनान्ते महाभारतं किंरूपं परिदृश्येते, केके नवाः विषयाः परिस्फुरन्तीति वक्तुं न पारयामः । आशोधनान्तमौत्सुक्येन वर्तिष्यामहे । प्रथमशोधनान्ते द्वितीयतृतीयशोधने अपि आवश्यके परिगणिष्येते इति-तूत्पश्यामः । भारतेयपण्डितास्सर्वेऽपि पुस्तकक्रयणेनैतमुद्यमं सफलं कुर्वन्तु ॥

महापाठशालीयवार्षिकपारितोषिकवितरणमहोत्सवसमारम्भे श्रीबेळवाडि रामस्वामिमहोदयैः कृते लोकोत्तरे भाषणे अनर्घतमान्यत्युज्ज्वलान्याशयरत्नानिदर्यदृश्यन्त । एषां सन्देशसारोऽत्रसङ्गृह्यते—

श्री बेळवाडि रामस्वामिमहोदयानां भाषणम्

" संस्कृतवाङ्मयसर्वस्वसंरक्षणं निखिलभारतेयानामादिमं कर्तव्यम् । संस्कृतवाङ्मयं हि भारतेयश्रेयः पथः, तथैव निखिलजगच्छ्रेयः पथोऽपि, निदानम् । तथैव सारस्वतसम्पदा भारतवर्षीयाः वेदविदश्शास्त्रद्रष्टारः पण्डितप्रकाण्डाः कविपुङ्गवा इति विख्यानाः विरजिरे । तैश्च भारतभूमिरियं जगद्वन्या अभूत् ॥

" अनादिकालादेतद्विद्यासम्पदस्संराक्षितारो ब्राह्मणश्रेष्ठाः । राज्यविप्लवेषु ग्रन्थरक्षणैकतत्पराणां तेषां विद्याप्रेम नाविस्मरणीयम् । रणाङ्गणे मृतवत्पतित्वा शत्रोरपगमे उथ्तायोदरानिबद्धं ग्रन्थचयं रक्षितवतां श्रीवेदान्तदेशिकानां शुभोदन्तः कस्य विद्यप्रेमिणो नार्द्रयेन्मनः ?

" इदानींतनास्सूरयस्तेषां प्रतिनिधयः ; जनाङ्गे तेषां निरन्तरनिरन्तरायस्थितिरावश्यकी । श्रीमन्महीशूरतिरुवांकूरमहाराजाः मठाधिपाश्च तेषामाश्रयदानेन लोकमुपकुर्वन्तः शोभन्तेतराम् ॥

" एषां लोकोपकारिणां पण्डितानां पर्याप्तवेतनदानविषये तु प्राणधारणे यावदपेक्ष्यते तावन्मात्रं देयम् ; अधिकं नदेयम् ; नापेक्ष्यते ; नापेक्ष्यं च । पण्डिता वैराग्यनिधयो भवेयुः ॥

" वैराग्यविषये तावत् आश्रमचतुष्टयमध्ये वानप्रस्थसन्यासाश्रमयोर्जनतायामपरिग्रहः भारत्येश्रेयस्कामिभिस्सर्वैरपि संशोच्यः । आदिमाश्रमद्वयमेवाधुना दरीदृश्यते । तदपि विकलं विलक्षणं लक्ष्यते ॥

"महापाठशालायामधीत्योत्तीर्णानामुत्तरत्र का गतिः? इति किञ्चिद्विचारणीयम्। पुरा किल विद्वान् सर्वत्र पूज्यते, 'सुकविता यद्यस्ति राज्येन किम्' इति काचन भावनाऽऽसीत्। विद्वांसः अल्पसन्तोषिण आसन्। लौकिकजना वैदिकान् पुपुषुः। इदानीं तु जीविका सर्वेषां दुर्लभा भवति। वैदिकानामाश्रयस्सुशिथिलस्संवृत्तः॥

"लौकिकजनानां मुख्यकर्तव्यमिदम्-वैदिकजनान्यावच्छक्ति-द्रव्यप्रदानेन तोषयित्वा तान् विद्यार्जनप्रवचनानुष्ठानादिशुभव्यवसाय-प्रवणान् कुर्युः। द्रव्यप्रदानादधिका तावत्तेषां समर्हणा। द्विसहस्र वर्षेभ्यः पूर्वं यादृशाः पण्डिता बभूवुः तादृशा अद्यापि भवन्ति। तेषां सामर्थ्ये नकोऽपि ह्रासस्समजनि। तेषां प्रोत्साहने तु ह्रासस्सम-भूत्। अत्र प्रोत्साहनं न द्रव्यरूपम्; किन्तु गौरवरूपम्। धार्मिकः पण्डितजनः एकरूप्यकवेतनवान् वा एकसहस्ररूप्यकवेतनवान्वा भवतु। उभयथापि सममेव गौरव्यः। अनादिकालात् भारतयविद्या-संरक्षणक्रमे पण्डितगौरव मेवैकोपायः। यस्मिन् दिने पण्डितः धना-र्जनाय प्रवर्तते तं बाढं दुर्दिनं मन्य इत्यादि श्री आशुतोषमुखर्जि-महाशयैर्यदुक्तं तत्सर्वमवदातम्; वैदिकलौकिकोभयवर्गाभ्यामपि सम समनुष्ठेयम्॥

"जनाङ्गस्य यथा राजनीतिविशारदाः कलाकोविदाः कविसार्व-भौमाश्चावश्यकाः तथैव ज्ञानभक्तिवैराग्यदिग्दन्तिनः आत्मविद्यानिधयो वैदिकवराश्चावश्यकाः। अमी हि जनपदस्यैहिकसम्पदां पदं, एते तु शान्त्यानन्दादिनिदानभूतामुष्मिकविद्याभिवर्धकाः। जनाङ्गे आमुष्मिक-विद्यासद्धर्मसदनुष्ठानादिकल्याणपरम्पराः पालयितुं पोषयितुं चालमेषा महापाठशाला। आमुष्मिकविषयानधिकृत्य वारंवारमुपन्यासा अत्र-दापयितव्याः। अन्यच्चाङ्गलकलाशालासु ये आस्तिक्यबुद्धिसम्पन्ना

अपि परनास्तिक्योपहतास्तेषां विद्यार्थिनां महापाठशालाविद्यार्थिभिस्सह समावासभोजनादिकं सम्पादनीयम् ॥

एतेन क्रमशः आङ्गलकलाशालास्वपि स्वाचारामृतसेकस्सुकरो भवेत् । गृहेषु सनातनपद्धतयाश्चिरादेवापास्ताः । वृद्धानामप्याचारा अविचाररमणीयाः । तस्माद्गृहेषु धर्मोज्जीवनं न सुकरम् । संस्कृतविद्याशालासु सुकरं भवेत् ॥"

इत्येवमगाधगम्भीराशयमेदुरं एतन्महाभागभाषणं पण्डिता लौकिकाश्च स्मारंस्मारमनुदिनमनुतिष्ठेयुः । पण्डिता यद्यकामहतश्रोत्रिया भवन्ति तेषां न विद्यत एव द्रव्यवाञ्छा । द्राविणं खलुचारित्रशाणोफलः । 'मा गृधः कस्यस्विद्धनम्' इत्युपनिषत् । आयानुकूलो व्ययः जीवनतन्त्ररहस्यम् । य एतत्तत्वं विद्वान् तदनुरोधेन जीवेत्स वैदिको वा लौकिको वा भवतु अमन्दमानन्दमवाप्य जनतायां माननीयो महीयते । अन्यच्च नैराश्यालङ्कृतानां वैदिकविदुषामपि भगवता पर्याप्तं धनकनकादिकं दीयतएवेत्यस्माकमनुभवः । "तानन्तरेण निपतेत् क्वनु मत्प्रणामः ?" । येषु महनीयगुणास्ते निसर्गतो महीयन्त एव । "रिक्तस्सर्वो भवति हि लघुः पूर्णता गौरवाय" ॥

अस्मत्पाठशालापत्रिकाविनिमयेन उपलभ्यमानानां पत्रिकान्तराणां सूची अन्यत्र दर्शिता । आसां सम्पादकमहाभागाः अविरतपरमादरेणास्मत्पात्रिकां संभाव्य विनिमयेन स्वेषां श्रीमतीः पत्रिकाः यथाकालं प्रहिण्वन्ति । तेषु सम्पादकमहाशयेषु अस्मदीयधन्यवादाननन्तान् सन्तोषेणसमर्पयामः ॥

अस्मत्पत्रिकाविनिमयेन उपलभ्यमानानि पत्रिकान्तराणि.

---

# पाश्चात्यप्रमाणतत्वम्.

---

इदं जलमयं घटः पटोऽयमिति तानि तानि वस्तूनि जनो दृष्ट्वा यथालोकव्यवहारं व्यवहरति। कथं जलज्ञानं घटज्ञानं पटज्ञानं व्यवहर्तुरुदेतीति जिज्ञासायां तत्स्वरूपं तार्किकास्तावदित्थं निरूपयन्ति—"आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते" इति। आत्मसंयुक्तं मनः चक्षुरिन्द्रियेण संयुज्यते। तच्चात्ममनस्संयुक्तं चक्षुरिन्द्रियं जलेन वा घटेन वा पटेनवा दिदृक्षोः पुरुषस्येप्सितेन संयुज्यते। ततः जलादिकमीप्सितं वस्तु प्रत्यक्षं भवतीति तदर्थः॥

अत्र तावदयं सन्देहः प्रसरति—कथं वा चक्षुर्गोलगतं चक्षुरिन्द्रियं बहिर्भूतले विद्यमानेन जलेन घटेन पटेन वा संयोक्तुं प्रभवति? किं चक्षुरिन्द्रियं बहिश्चलित्वा वस्तुना संयुज्यते? न हीन्द्रियं बहिश्चलतीति कस्याप्यनुभवः। तथा चेत् स्पर्शं विनापि स्पार्शप्रत्यक्षं स्यात्। स्पार्शप्रत्यक्षे वस्तुना साकं त्वगिन्द्रियस्याव्यवहितसंयोग आवश्यक इति सर्वेषां विदितमेव। तथैव रसप्रत्यक्षे रसनेन्द्रियस्य रस्यमानवस्मुना ऽव्यवहितसंयोग आवश्यक इति सर्वानुभवसिद्धम्। नहि लवणरसनयोरव्यवहितसंयोगं विना लवणरसज्ञानं जायते। शाब्दप्रत्यक्षेऽपि दूरस्थशब्दस्य श्रोत्रेन्द्रियसम्बन्धं दर्शयितुं वीचीतरङ्गन्यायं कदम्बमुकुलन्यायं शब्दान्तरोत्पत्तिं वा तार्कीकाः निदर्शयन्ति। गन्धप्रत्यक्षोत्पत्तिरपि तथैव स्यात्॥

चाक्षुषप्रत्यक्षादन्येषु चतुर्षु प्रत्यक्षेषु यथा खल्विन्द्रियवस्तुनोरव्यवहितसम्बन्धः प्रतिपाद्यते तथैव चाक्षुषप्रत्यक्षेऽपि चक्षुरिन्द्रियवस्तुनोरप्यव्यवहितस्संयोगरूपस्सम्बन्धः उपपादनीयः

अत्र पाश्चात्या विद्वांसस्तावदित्थं तदुपपादयन्ति.—आलोकासहकृतं चक्षुरिन्द्रियं न वस्तु प्रकाशयति । तमसि हि यत्किञ्चिद्वस्तुविषयकं चाक्षुषज्ञानं न जायते । अतः सूर्यादिप्रभा चाक्षुषज्ञाने सहकारिकारणमित्यङ्गीकर्तव्यम् । प्रभायास्सहकारिकारणता चाक्षुषज्ञाने तार्किकैरभ्युपगता दृश्यते । चक्षुर्गोलं "फोटोग्राप्" इति वस्तुप्रतिकृतिजनकयन्त्रसमानसंस्थानं वर्तते । यन्त्रेण वस्तुप्रतिकृतिनिर्मातारः चित्रकाराः कृष्णपटावृतं यन्त्रं प्रभायां स्थापयन्ति । यन्त्रस्यान्तः काचफलकद्वयं वर्तते । तत्रैकमर्धचन्द्राकारं लेन्सिति नाम्ना विख्यातं फलकमग्रे वर्तते । तस्य पृष्ठभागे पुरस्तात्पश्चाद्वा चालयितु मर्हमेकं काचफलकं वर्तते । यदा कृष्णवस्त्र मावरणमपाक्रियते तदा सूर्यकिरणाः प्रथमकाचफलके पतन्ति । पतित्वा प्रतिफलन्ति । प्रतिफलिताः किरणाः द्वितीये काचफलके पतन्ति । यदा वा त एते किरणाः यन्त्राद्बहिर्विद्यमानस्य पुरुषादिकस्योपरि पतित्वा लेन्स्नामककाचफलकद्वारा अन्तः प्रविश्य द्वितीये काचफलके प्रतिफलन्ति, तदा तत्र ते तद्वस्तुसमानाकारां प्रतिकृतिं रचयन्ति । एतादृशप्रतिकृतिरचनायां वस्तुप्रदेशप्रतिकृतिप्रदेशयोरन्तरायामनियमोवर्तते, तथैव लेन्स्नामककाचफलकद्वितीयप्रतिकृतिफलकयोरप्यन्तरायामनियमोवर्तते । अन्तरायामनियम इत्युक्ते तयोराभ्यन्तरप्रदेशस्य दैर्घ्यमेतावदेवेति निश्चयः । तादृशायामातिक्रमे प्रतिकृतिर्नोत्पद्यते । उत्पन्नाऽपि न सौष्ठवं प्रतिपद्यते । अतः पुरस्ताद्वा पश्चाद्वा प्रतिकृतिफलकं सञ्चाल्य कृतमन्तरायामं

सम्पाद्य चित्रकाराः वस्तुसमानाकारसौष्ठवां प्रतिकृतिं रचयन्ति। तदिदं सर्वेषामपि जनानामिदानीं दृष्टचरमपि नानुभूतपूर्वमिति अत्र सङ्क्षेपेण वर्णितम् ॥

नेत्रगोळमपि पूर्वोक्तयन्त्रसमानम् । अत्रापि काचफलकसजातीयं फलकद्वयं वर्तते । यन्त्रे चित्रकारः द्वितीयफलकसञ्चालनेन आभ्यन्तरायामनियमं सम्पादयति । अत्र तु आत्मैव चित्रकारः । सः स्वेच्छयैव द्वितीयं रेटीनेति पाश्चात्यैरभिधीयमानं फलकं सञ्चाल्य यथेप्सिताभ्यन्तरदेशे स्थापयति। तस्मिन्फलके बहिष्ठानां वस्तूनां प्रतिकृतिः प्रतिफलीभूय तिष्ठति । तदेतत्प्रतिकृतिसाक्षात्कारो मनसः जायते । तादृशसाक्षात्कारः शिरोमध्यस्थनाडिकाद्वारा जायते । इति पाश्चात्या विद्वांसः बहुधा परीक्ष्य कृतनिश्चया वदन्ति ॥

तथा चेदं सिद्धम्—चाक्षुषप्रत्यक्षक्षेत्रं नेत्रगोळान्तवर्तते, तत्र क्षेत्रे वस्तुप्रतिकृतेः नाडिकाद्वारा मनसश्च संयोगो भवति ततः चाक्षुषप्रत्यक्षज्ञानमुत्पद्यत इति वक्तुं शक्यते ॥

फोटोग्राफ्नामकयन्त्राभ्यान्तः द्वितीयफलके विरचिता वस्तुप्रतिकृतिः केवलं रेखासंस्थानविशेषः । रेखासंस्थानं तु न द्रव्यम् । द्रव्ययोः परस्परसंबन्धः संयोग इति तार्किका वदन्ति । अत्र चाक्षुषज्ञाने मनसः प्रतिकृतेश्च यस्सम्बन्धस्स संयोगो न भवति । मनसो द्रव्यत्वेऽपि रेखासंस्थानस्य द्रव्यत्वाभावात् । अतः चाक्षुषप्रत्यक्षे यथा इन्द्रियार्थयोस्संयोगो न जायते तथा मनसः वस्तुप्रतिकृतेश्च संयोगो नास्त्येवेति बाढं ज्ञायते । अतश्च “आत्मा मनसा संयुज्यते । मन इन्द्रियेण । इन्द्रियमर्थेन । ततः प्रत्यक्षमिति तार्किकैः परिभाषितः प्रत्यक्षक्रमः चाक्षुषप्रत्यक्षे न दृश्यते ॥

प्रत्यक्षेण हि वस्तुज्ञानं जायते इति तार्किका वदन्ति । त्वाच-प्रत्यक्षं घ्राणप्रत्यक्षं रासनप्रत्यक्षं श्रौत्रप्रत्यक्षं चाक्षुषप्रत्यक्षं मानसप्रत्यक्ष-मिति प्रत्यक्षं षड्विधम् । तत्र त्वाचप्रत्यक्षे त्वगिन्द्रियस्य घटादिवस्तु-नश्च संयोगो यदा भवति तदा निमीलितनेत्रस्य अयं घटः अयं पटः इति वस्तुविशेषज्ञानं न जायते । किं तु "इदं कठिनम्; इदं मृदु; शीतमिदम्; इदमुष्णम्" इति काठिन्यमार्दवशैत्यौष्ण्यादिगुणज्ञानमेव केवलमुत्पद्यते काठिन्यादिगुणविशिष्टं वस्तु घटरूपं वा, पटरूपं वा, उत फलकं वा आहोस्विदन्यद्वा यत्किंचिद्वस्तु इति संदेह एव दरी-दृश्यते । एवं निमीलितनेत्रस्य गंधज्ञान जाते गन्धवद्वस्तुनः स्वरूप-विशेषः न विदितो भवति । रासनप्रत्यक्षेऽपि निमीलितचक्षुषो जनस्य रसनातलस्थवस्तुनः स्वरूपं नावगतं भवति । इत्थमेव निमीलिताक्षो जनः शब्दं श्रुत्वा शब्दजनकं निकटस्थमपि वस्तु नावगच्छति ॥

चाक्षुषे ज्ञाने केवलं प्रतिकृतिरेव मनसाऽवबुध्यते । न तु यथा-स्थितं वस्तु प्रत्यक्षीक्रियते । यद्यपि प्रतिकृतेरुत्पत्तौ वस्तु कारणम्, वस्तुनि विद्यमाने सत्येव तस्य प्रतिकृतिः नेत्रान्तःफलके विरच्यते । तथापि वस्तुसाक्षात्कारो न भवति केवलं प्रतिकृतिज्ञानेन प्रतिकृति-कारणं वस्तु बहिर्वर्तते । इत्यनुमितिरुत्पद्यते । तथा च चक्षुरिन्द्रियेण यथास्थितं बहिष्ठं वस्तु पत्यक्षीकर्तुं न शक्यत एवेति पाश्चात्या विद्वांसो वदन्ति । वस्तुप्रतिकृतिज्ञानमात्रेण प्रतिकृतिनिदानं वस्तु प्रत्यक्षीकृत-मिति वक्तुं शक्यते ?

किं च फोटोग्राफ्यन्त्रे रविकिरणप्रत्युप्तायां यस्य कस्य चन वस्तुनः प्रतिकृतौ तस्य वस्तुनः रूपादिगुणाः न प्रत्युप्यन्ते । न नीलवस्तुनः प्रतिकृतिः यन्त्रफलके नीला दृश्यते । न निम्नमुन्नतं वा वस्तु निम्नमुन्नतं फलके दृश्यते । नापि दीर्घाद्यायामगुणाः यथा-

इत्यवबुध्यते । विस्तृतोऽपि चन्द्रः प्रादेशमात्र इत्यवगम्यते ” इति प्रत्यक्षस्यप्रमात्वं विदूष्य स्पष्टीचक्रुः ॥

अपरे पाश्चात्यविद्वांसः भौतिकशास्त्रविचक्षणाः आकाशगतस्य ईथर्नामकवस्तुनः परमाणूनां डोलागतिसदृशं चलनमेव रूपम् । तथाहि यथा डोला पुरस्तादूर्ध्वं गत्वा पुनः प्रतिनिवृत्य पश्चात्किञ्चिदूर्ध्वं गत्वा प्रतिनिवृत्य सततं चलति तथैव वृत्तार्धदेशे वृत्तपाददेशे वा ईथर् परमाणवः डोलागतिं कुर्वन्ति । घटीयन्त्रे घंटाताडनशलाका यथा वा डोलागतिं करोति तथैव ते परमाणवः सततं चलन्ति । डोलागतिः वृत्तखण्डपरिधौ सम्भवति । डोलागतिपरिधिविस्तारानुरोधेन रक्तपीतहरितनीलादिरूपभेदास्सम्भवान्ति । परिधावतिदीर्घे रूपमेकम् । परिधावतिह्रस्वेऽन्यद्रूपम् इति परिधेः दैर्घ्यभेदात्सप्तापि रूपाणि समुत्पद्यन्ते । एवमेव वाय्ववयवभूतपरमाणूनां डोलागतिसमानचलनमेव शब्दमुत्पादयति । तथाच यद्वस्तु नीलमिव दृश्यते तन्निकटस्थाकाशपरमाणूनां नीलजनकडोलागत्या समुत्पन्नमितिहेतोः न वस्तूनां सहजं रूपमस्तीति पाश्चात्यविद्वांसः बहुधा परीक्ष्य निरणयन् ।

क्यांट्नामा जर्मनीदेशीयो विद्वान् देशकालौ मनःकल्पितौ वस्तुष्वारोप्येते, न तु वस्तुतः देशकालौस्तः इति निराचिनोत् । जगति देशकालसंयोगं विना न किं चिद्वस्त्ववगम्यते । अत्र घटोऽस्ति, तत्र पटोऽस्ति “ इदानीं स गच्छति । श्वः देवदत्तः प्रतिनिवृत्तः ” इति देशकालसम्बद्धा एव प्रत्यया स्समुत्पद्यन्ते । देशकालौ च मनःकल्पितावित्युक्तम् । तदित्थं देशकालसम्बन्धविनाकृतं स्वतोरूपशून्यं च वस्तु कथं ज्ञानपथमारोहेत् ? यच्च वस्तु ज्ञानपथमारोहति तद्देशकालात्मकान्यद्रव्यसंयुक्तं नीलपीताद्यन्यतमान्य-

रूपविशिष्टमेव ज्ञायते, न तु स्वस्वरूपेण। अतः वस्तुन सहजु-माकृतिसंस्थानं न परिशीलितुं शक्यते। अतो जगदान्ध्यं सर्व-स्याप्यस्त्येवेति क्यांटनाम्नो जर्मनीदेशीयविदुषः मतम् ॥

अन्ये केचन पाश्चात्यविद्वांस जगदिदं केवलं चिदात्मक-मेवेति कृतनिर्णया वर्तन्ते। सर्वमपि परमाणुपुञ्ज एव। परमाणवश्च सततचलनस्वभावाः चिदात्मका एव। परमाणुपुञ्जात्मके शरीरे पर-माणुगतमेव चैतन्यमेकधा प्रवहद्दृश्यतेऽनुभूयतेच। यदि परमाणुः चेतनो न स्यात्, कथं वा परमाणुपुञ्जे चेतनप्रस्फूर्तिरुदश्चेत? इति हि तेषां मतम् ॥

तदिदं प्रत्यक्षप्रमाणखण्डनमसहमानाः अन्ये पाश्चात्याविद्वांसः प्रत्यवतिष्ठन्ते। वस्तुनि चक्षुषा साक्षादप्रत्यक्षीकृते पि परम्परासम्बन्धेन प्रतिकृतिद्वारा प्रत्यक्षीक्रियत एव। तथा चानुभूयमानं जगदिदं सत्यमेव। ये च नानाविधा प्रत्ययाः वस्तुप्रत्यक्षानन्तरं मनसि उदयन्ति ते च वस्तुगतानवस्थाविशेषान् द्योतयन्ति। तदित्थं प्रति-कृतिसाक्षात्कारादनन्तरं मनसि परिकल्प्यमानाःदूरत्वनैकट्यगुरुत्वलघुत्व-शैत्यौष्ण्यादिप्रत्ययाः वस्तुगतगुणविषया एवेत्यनुमीयन्ते। न हि वस्तुष्वसत्सु एतादृशाः प्रत्यया मनस्युत्पद्यन्ते। तेषु वस्तुषु सत्सु तत्तद्वस्त्वनुगुणा गुणप्रत्ययास्सम्भविष्यान्ति। अतोऽन्वयव्यतिरेकविषया वस्त्वनुमितिः प्रमैव। किं बहुना वस्तुज्ञाने वस्त्वेव कारणमिति वस्तुतद्ज्ञनयोः कारणकार्यभावं ते वदन्ति ॥

अत्र ह्यूम्नामा पाश्चात्यविद्वान् तदनुयायिनश्चान्ये पुनः प्रत्य-वतिष्ठन्ते। एते न कार्यकारणभावनियम मभ्युपगच्छन्ति। कार्य-नियतपूर्ववर्ति हि कारणम्। वटवृक्षाङ्कुरनियतपूर्ववर्ति वटबीजं वटा-ङ्कुरकारणमिति हि कार्यकारणभाववादिभिर्वक्तव्यम्। अत्र वटबिज-

स्यैवक्षेत्रजलदोहदसामग्र्याद्यनेकवस्तूनां पूर्ववर्तित्वं दृष्टम्। तेषु कस्य कारणत्वं कस्याकारणत्वमिति भूयान् सन्देहः। सर्वेषामपि कारणत्वे किं तेनानियतेन कार्यकारणभावनियमेन। कार्यनियतपूर्ववर्तीनि-बहूनि वस्तूनि सन्ति। कॢप्तं कारणमजानानाः जनाः बहुधा व्यामोहेन वितथमपि कार्यकारणभावं कल्पयन्ति। तेन च जगद्वञ्चितं भवति। अतो नतैः कार्यकारणभावोऽङ्गीक्रियते। तथा च मनोराज्यमेव ह्यूम्प्रभृतीनां पाश्चात्यविदुषां प्रत्यक्षविषयः, न तु बाह्यप्रपञ्च इति सिद्धम्॥

पाश्चात्या विद्वांसः ज्ञानमात्माश्रयमिति न वदन्ति। अनुभवसंस्कारस्मृत्यादिभेदभिन्नं ज्ञानं क्वचिदंशे मनोजन्यं अथवा मनोगतं क्वचिदंशे सेरेब्रामेति शिरोमध्ये अन्तः यन्नाडिकासंस्थानं तज्जन्यं तद्गतं वा दृश्यते इति वदन्ति तत्र ' घटं अहं जानामि " इति या बुद्धिरुत्पद्यते सैव ज्ञानमिति व्यवह्रियते पाश्चात्यमतरीत्या ज्ञानसामान्यमपि स्मृतिविरहितं नैवोत्पद्यते। घटदर्शनानन्तरं यदा ज्ञानं प्रभवति तदा घटस्मरणं घटपदस्मरणं घटस्य जलाधारता स्मरणमिति घटविषयकानि बहुविधानि स्मरणानि सम्भवन्ति। एतादृशापरिमितस्मरणानां अनुभव एव कारणं। अनुभवश्च भावनाजन्यः। "भावनाया उत्पत्तौ प्राक्तनानुभव कारणमिति " तार्किका वदन्ति। भावना कदाचित्स्वतस्सिद्धा गूढा वर्तते। उत्तेजकसामग्रीसत्वे निगूढा सा भावना स्मृतिं जनयति तदित्थं मनसि सेरेब्रम्नामकशिरोऽन्तस्थनाडिकासंस्थाने वा उत्तेजकसामग्र्या उद्बुद्धं ज्ञानं सर्वान्विषयान्व्याप्नोति। यदा बालः गणितं चरित्रं वा अधीते तदा गणितज्ञानं चरित्रज्ञानं वा बालस्य मनसि शिरसि वा उपाध्यायेन न निक्षिप्यते घटे जलमिव, किं तु विविधानां

ज्ञानविषयाणां धूमाग्न्योरिव परस्पराविनाभावसम्बन्धः प्रदर्श्यते। एतद्दर्शनं बालस्य मनसि परस्परसम्बद्धज्ञानसरणिं तावत्कालं मनसि निगूढस्थितां उद्बोधयति। उद्बुद्धं च तज्ज्ञानं तदा स्मृतिरूपमावहति। इत्थं गणितज्ञानं चरित्रज्ञानं शास्त्रज्ञानमित्यनेकधा विषयभेदाद्भिन्नं ज्ञानं बालस्य भवति। "अन्कान्षस्नेस्" "सब्कान्षस्नेस्" इति निगूढभावनाया एव तैर्नामान्तरं दत्तं वर्तते॥

अद्भुतशक्तिसम्पन्नेयं निगूढा भावना कथ प्रादुरासीत् इति तु नैव निर्णेतुं शक्यते अथापि सा तत्रवर्तते इत्यत्र न कोपि सन्देग्धि। मनुष्यष्य निगूढभावना सहजा शक्तिः। तस्या महिम्ना बालोऽपि कालक्रमेण प्रज्ञामधिगच्छति। तस्या महिम्ना सत्युत्तेजके जनः नानाविधशास्त्रज्ञानं प्राप्नोति उत्तेजकाभावे पशुसधर्मा स तिष्ठति। बालस्य स्तन्यापेक्षा अदृष्टकामिनीमुखस्यापि यूनः कळत्रापेक्षा ऋतुभेदमजानतां पक्षिणामपि नीडादिरचनायां प्रवृत्तिः अनधीतक्षेत्रगणितानामपि मधुमक्षिकाणां षडश्रादिसन्निवेशरमणीयक्षौद्रपटलरचनायां प्रवृत्तिः सहजसिद्धाया निगूढभावनाया महिम्नैव जायत इति पाश्चात्यविद्वांसः सप्रपञ्चं वर्णयन्ति॥

प्राक्तनजन्मसंस्कार एव शिशुं स्तन्यपाने प्रवर्तयतीति चिरन्तना भरतखण्डीया महर्षयः बहुषु ग्रन्थेषु प्रत्यवादयन्। संस्कारस्य वासनेति नामान्तरमपि विद्यते। जन्मान्तरं पाश्चात्या नाभ्युपगच्छन्ति। यस्संस्कारः स्तनन्धयं सद्यः प्रसूतमपि स्तन्यपाने प्रवर्तयति, स संस्कारः मातापितृसंबन्धादेव शिशौ सङ्क्रामतीति पश्चात्यानां मतम्॥

अपरे अखण्डैकचिन्मात्रवादिनः (Absolute Idealists) दिक्कालकारणानवच्छिन्नं अखण्डं चिदेकमेवास्ति। तदेकमेव प्रतिप्राणि

विच्छिन्नं भूत्वा प्रविशन्ति । यथा प्रतिपात्रं समुद्रजलमेकमेव यथा-पात्रप्रमाणं प्रविश्य तिष्ठति, तथैव अखण्डं ज्ञानमपि प्रतिप्राणि प्रविश्य तिष्ठति अत एव देवदत्तस्य वस्तुदर्शनानन्तरं यथा ज्ञानं जायते तथैव तद्वस्तुदर्शनानन्तरं यज्ञदत्तस्यापि जायते देहोपाधि-वशात्कचिदंशे भेदे विद्यमानेऽपि सामान्यतो ज्ञाने भेदो नास्ति । विद्युद्गर्जनादिकं दृष्ट्वा यथा देवदत्तस्य "मेघो वर्षति" इति प्रत्ययस्सम्भवति तथैव तद्दर्शनेन यज्ञदत्तब्रह्मदत्तादीनामन्येषाममि जना-नां तादृशः प्रत्ययस्सञ्जायते । किं च ज्ञानं कदाचिदपि न स्वरूपा-द्भ्रश्यति । नापि वर्धते । किन्त्वेकाकारमेव सदा वर्तते इति तेषां मतम् ॥

अन्ये केचन पाश्चात्याः (Pragmatists) सर्वमपि सादि सान्तं चेति मत्वा, ज्ञानमपि सादि सान्तं चेति मन्यन्ते । उत्पन्नं ज्ञानं विषयाधीनवृद्धिकम् । विषयज्ञानं प्रयोजनाधीनम् । प्रयोजनबा-हुल्यवशात् विषया अपि बहवः भवन्ति । यदा ज्ञेया बहवोविषया ज्ञाता भवन्ति तदा ज्ञानं वृद्धं भवति इति तेषां मतम् ॥

यद्विषयकं ज्ञानं अर्थक्रियाकारि तद्ज्ञानं तद्विषये प्रमा । यदा च तद्ज्ञानमर्थक्रियाकारितां जहाति तदा तद्ज्ञानं भ्रमः, इत्यर्थक्रिया-कारितानुरोधेन ज्ञानस्य प्रामाण्यं ते कथयन्ति । जगति बहुषु वस्तुषु सत्स्वपि जनः यद्यद्वस्तु स्वोपयोगाय भवति तत्तद्वस्तुज्ञानायैव प्रवर्तते । न कोऽपि सर्ववस्तुविषयकं ज्ञानं लभते । नापि सर्वं ज्ञानं प्रमा । अतः न कोऽपि सर्वज्ञो वर्तते । किं च ज्ञानस्य प्रामाण्यं प्रयोजनाधीनम् । इति च तेषां अभिप्रायस्समुल्लसति ॥

किं च ऐहिकसुखप्रेप्सया आमुष्मिकसुखप्रेप्सया वा यद्यज्जनैः कश्चिदेकस्मिन् समयेऽनुष्ठीयते ततोऽन्यदेव देशान्तरे कालान्तरे वा

तैरनुष्ठीयते । यद्यत्किञ्चित्फलेप्सया पुरा जनैरनुष्ठितं, "तदीप्सितं फलं न प्रयच्छतीति" वा "ततोऽन्यद्दुरिष्टफलप्रदमिति" वा पुरातनं कर्माचरणं विहायान्यत्कर्म जनैरुत्तरस्मिन्कालेऽनुष्ठीयते । पुरा यूरोप्खण्डे जनाः ग्रावनदीवृक्षादिकं निर्जीवं वस्तु देवताबुद्ध्याऽपूजयन् । कालान्तरे क्रैस्तमतमवलम्ब्य ग्रावादिपूजां त्यक्त्वा क्रैस्तप्रतिमां अपूजयन् । ततः पुनः "न मूर्तिपूजा फलदा" इति मत्वा बाह्यपूजां विहाय केवलं स्तोत्रपाठमेव क्रैस्तदेवायतनेषु कर्तुमारेभिरे । तदित्थं यज्ज्ञानं प्रमेति कदाचित् जनैरबुद्ध्यत स भ्रम इत्युत्तरकाले जनैरवगम्यते ॥

एवमेव राजनीत्यामपि यो वा राज्यपरिपालनक्रमः जनैर्योगक्षेमावह इत्यमन्यत, "स दुःखद" इत्युत्तरकाले मत्वा जनाः तद्भिन्नमेव राज्यपरिपालनक्रमं निर्णयन्ति । इत्थमेव वैवाहिकादिपद्धतौ यस्सम्प्रदायः पुरातनैर्यूरोप्खण्डे समाश्रित आसीत्, ततो विपरीतस्सम्प्रदायः अधुनातनैस्तत्र समाश्रितो दृश्यते । एवमेव ऋणादानादि व्यवस्थास्वपि जनहितेच्छया पुरातनव्यवस्थाक्रमं त्यक्त्वा नवीनमपरं व्यवस्थाक्रमं राजानस्तत्र विदधति ॥

किं बहुना बहुजनाभिप्रायमनुरुद्ध्य धर्माचारविवादपदनिर्णयक्रमादिकस्सर्वोऽपि व्यवहारः राजशासनेन तत्र व्यत्यस्यमानो दृश्यते । यथा ज्ञानं क्षणिकं तथैव तेषामाचरणादिकमपि न चिरस्थायि ॥

तदेतत्सर्वं ज्ञानोत्पत्तिवृद्धिनाशवादिनां मतं बाढं उपबृंहयति । भरतखण्डीयास्तु सनातनधर्मावलम्बिन एवेति शम् ॥

आर्. शामशास्त्री

# विशिष्टाद्वैतम्—(पूर्वतोऽनुवृत्तम्)

---

## एकं शास्त्रम्.

"अथातो धर्मजिज्ञासा," इत्यारभ्य "अनावृत्तिश्शब्दात्" इत्येवमन्तं विंशत्यध्यायात्मकं मीमांसाशास्त्रं वेदार्थविचाररूपं धर्ममीमांसा देवमीमांसा ब्रह्ममीमांसा इति काण्डत्रयात्मकमेकं शास्त्रमित्यभ्युपगमः ॥

तत्र प्रथमः काण्डः द्वादशलक्षणात्मकः आचार्येण जैमिनिना प्रणीतः । द्वितीयः चतुर्लक्षणात्मकः कर्मकाण्डशेषभूतः काशकृत्स्नाचार्येण प्रणीतः । तृतीयोऽध्यायचतुष्टयात्मकः कर्मकाण्डशेषिभूतः आचार्यबादरायणेन प्रणीत इति निर्णय ॥

श्रीभाष्ये तदाह वृत्तिकारः—"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति वृत्तिवाक्यमेकशास्त्रत्वसम्प्रदायप्रतिपत्तये भगवता भाष्याकृता समुदाहृतं, तत्र "संहितं" इति पदस्य नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया सङ्गतमिति व्याख्यानं च दृश्यते । संहितमिति वचनं वृत्तिग्रन्थावलोकनेन संगृहीतमिति साम्प्रदायिकाः प्राहुः । ग्रन्थान्तरोदाहरणात्संगृहीतं स्यादिति परीक्षकाः । यथा "पूर्ववृत्ताद्धर्मज्ञानादनन्तरं ब्रह्मजिज्ञासा" इति वाक्यं श्रीभास्करीये ब्रह्मसूत्रभाष्ये दृश्यते । तथा—"वृत्तात्कर्माधिगमात्" इत्यंशः श्रीशांकरभाष्यटीकायां पञ्चपादिकायामप्यनूदितोऽस्ति ॥

शतदूषण्यां तृतीये वादे संहितपदतात्पर्यमेवं वर्णितम्—"किं पूर्वकृतप्रासादखण्डविषमांशापनयनेन शेषनिर्माणे तदैक्यं नास्ति ?

अतः प्रतिसंस्कारेणात्रापि सन्धानम्" इति । अनेन परिष्करणादेकं शास्त्रमिति स्पष्टमवगम्यते । उदाहृतञ्चात्र निदर्शनं श्रुतप्रकाशिकाचार्यैः—

अतदर्थतया क्लृप्तमपि योग्यमपेक्षितम् ।

तादर्थ्यमर्हति ग्रामे कल्प्ये पूर्वतटाकवत् ॥

इति ॥ देवताकाण्डलक्षणा दैवी मीमांसा तु "शबरस्वामिभाष्ये केषांचित्सूत्राणामुदाहरणात् प्रामाणिक्येव" इति शतदूषण्यामष्टमवादान्ते अभिहितम् । तथा—माण्डूक्योपनिषत्कारिकासु वैतथ्यप्रकरणे "लोका इति लोकविदो देवा इति च तद्विदः" इति पद्यवाक्येन- आनन्दगिरीये—"अग्नीन्द्रादयो देवाः तत्फलदातारः नेश्वरस्तथेति देवताकाण्डीयाः" इति वाक्यमस्ति ॥

तथा श्रीपूर्णप्रज्ञैरनुव्याख्याप्रबन्धे—"देवताकाण्डे द्वितीयोऽध्यायः शेषप्रणीतः" इति लिखितमस्ति । ततश्चशेषएवसङ्कर्षणः । तस्मात् सङ्कर्षकाण्ड इति प्रथा प्रामाणिकी ॥ यथा—

देवमीमांसकाद्यन्तं स्वयं भगवता कृतम् ।

मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ॥ (अनुव्या) ॥

अतएव शतदूषण्यां तृतीयेवादे—"अत एव सेश्वरमीमांसापक्षोऽपि नातीव विच्छिन्नः । परैरनूद्यते च । देवताकाण्डं च कर्मशेषतया भाष्यकारैरङ्गयकारि । तदुक्तं सङ्कर्ष इति तत्रत्य सूत्राणि चोदाहरन्ति । तस्य चकाण्डस्योपसंहारे "अन्ते हतौ तद्दर्शनात्" इति देवताकाष्ठां प्रदर्श्य "स विष्णुराह हि" इति सर्वदेवताराधनानां तत्पर्यवसानाय तस्यसर्वान्तरत्वेन व्याप्तिं प्रतिपाद्य "तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते" इति तस्यैव वेदान्तवेद्यपरब्रह्मत्वोपक्षेपणोपसंहारात्" इत्यभिहितमस्ति ॥ तथा श्रीमध्वभाष्ये (1—1—1)

ब्रह्मशब्दश्च विष्णावेव ॥ अत्र टीका—"ब्रह्मेति ॥ विष्णावेव मुख्य इति शेषः । ब्रह्मशब्दस्यानेकार्थत्वेऽपि तस्य विष्णावेव मुख्यत्वात् मुख्यस्यैव ग्राह्यत्वात् स एव सूत्रकारविवक्षितो ज्ञायत इति भावः । "स विष्णुराह हि । तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते ॥ इति निरन्तर-सूत्रद्वये ब्रह्मत्वेन नारायणस्यैव प्रस्तुतिं सूचयति विष्णुग्रहणेन" इति लिखितमप्यास्ति ॥

अत्र श्रीमद्वेदान्ताचार्यप्रणीताधिकरणसारावळीपद्यद्वयमनुसन्धेयम्—

जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारैः
तस्मादैकशास्त्र्यं हठकृतमिति न ब्रह्मसंवाददार्ढ्यात् ।
तन्नस्तात्पर्यभेदैः विहतिपरिहृतिः काण्डवत्काण्डयोस्स्यात्
बाह्याक्षेपार्थगूढाशयवचनभवभ्रान्तिशान्त्यादिसिद्धेः ॥

वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता
सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र ब्रूमस्सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हाः
निर्वाहस्तूपचारात्क्वचिदिह घटते ह्येकतात्पर्ययोगात् ॥ इति ॥

इदं च शास्त्रैकत्वं सर्वेषामप्यौपनिषदानाभिमतमिति विजानीमः । तत्र मीमांसकसम्मतं यत्पुनः ब्रह्ममीमांसायाः कर्ममीमांसाशेषत्वं तेन च यदेकशास्त्रत्वं तदेव सर्वैः औपनिषदैर्निरसनीयम् । तथा हि—"एक आत्मनश्शरीरेभावात्" (3-3-53) इति ब्रह्मसूत्रे भगवता-शङ्कराचार्येणेत्थमभाषि—"इह देहव्यतिरिक्तस्यात्मनस्सद्भावस्समर्थ्यते बन्धमोक्षाधिकारसिद्धये । न ह्यसति देहव्यतिरिक्तात्मनि परलोकफला-श्चोदना उपपद्येरन् । कस्य वा ब्रह्मात्मत्वमुपदिश्येत ॥

ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनः अस्तित्व मुक्तं, सत्यमुक्तं भाष्यकृता, न तु तत्रात्मास्तित्वे सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वं आशङ्कापूर्वकं प्रतिष्ठापितम्। अत एवाचार्येण शबरस्वामिना प्रमाणलक्षणे निर्णीतम्। अत एव भगवता उपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्यामः इत्युद्धारः (अपकर्षस्य निवृत्तिः) कृतः। इहचेदं चोदनालक्षणेषु विचार्यमाणेषु आत्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रतिपादनायेति ॥

अस्मिन् सन्दर्भे शास्त्रप्रमुख इति, स्वयं सूत्रकृतेति, शबरस्वामिनेति, कृत्स्नशास्त्रशेषत्वेत्यादिभिः व्यवहारैः अभिप्रायैक्यात् उपजीव्योपजीवकभावात् कर्मणां विविदिषासाधनत्वाद्वेदनसाधनत्वाद्वा विद्यां प्रत्यपेक्षितत्वात् एवमादिभ्योऽन्येभ्यो हेतुभ्यः ऐक्याभिप्रायेणैव कृत्स्नं मीमांसाशास्त्रं प्रवृत्तं, तच्च भागद्वयेन भागत्रयेण वा प्रविभक्तमित्युल्लेखो युक्तः ॥

तथा तस्मिन्नेव श्रीशाङ्करभाष्ये समन्वयसूत्रे—"एवं च सति अथातो ब्रह्मजिज्ञासेति तद्विषयः पृथक्छास्त्रारम्भ उपपद्यते। प्रतिपत्तिविधिपरत्वे हि "अथातो धर्मजिज्ञासा" इत्येवारब्धत्वात् न पृथक्छास्त्रमारभ्येत। आरभ्यमाणं चैवमारभ्येत—"अथातः परिशिष्टधर्मजिज्ञासा ॥ इति। "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिवत् ॥ ब्रह्मात्मैक्यावगतिस्तु अप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः अथातो ब्रह्मजिज्ञासा "इति ॥ तस्मादहं ब्रह्मास्मीत्येतदवसाना स्सर्वे विधयः सर्वाणि प्रमाणानि। नह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्ति" इति दृश्यते ॥

अनेन च सन्दर्भेण मीमांसकसम्मतमेव कर्मकाण्डशेषतया ब्रह्म-

मीमांसायाः शास्त्रैकत्वं स्फुटं प्रत्याख्यातमवगम्यते। उपजीव्योपजीवकभावादिनियतक्रमेणपौर्वापर्यवत्योः कर्मब्रह्ममीमांसयोः एकशास्त्रत्वं तु न वेदान्तवादविरुद्धम् ॥ अत्र "पृथक्छास्त्रारम्भः उपपद्यते" इति स्पष्टमभिधानात् शास्त्रभेदः अभिमतः। "कृत्स्नशास्त्रशेषत्वेति" पूर्वमभिधानात् शास्त्रैक्यमभिमतमिति ज्ञायते। विषयभेदाच्छास्त्रभेदः। न्यायैक्यात् शास्त्रैक्यमिति विरोधपरिहारः सौहार्देनाकलनीयः ॥

अत्र यद्यपि अर्वाग्भिः अथशब्दस्य कर्मविचारानन्तर्यपरतत्वनिरासायैकशास्त्रत्वं खण्डितं, तथापि भाष्ये—"सति चानन्तर्यार्थकत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते एवं ब्रह्मजिज्ञासाऽपि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम्। स्वाध्यायाध्ययनानन्तर्यं तु समानम्। नन्विह कर्मावबोधानन्तर्यं विशेषः। न धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मणि जिज्ञासोपपत्तेः। यथा च हृदयाद्यवदानानामानन्तर्यनियमः क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः। शेषशेषित्वे अधिकृताधिकारे वा प्रमाणाभावात् धर्मब्रह्मजिज्ञासयोः" इत्यादिना ग्रन्थेन वेदव्याख्यानोपजीव्योपजीवकभावपौर्वापर्यादिप्रयुक्तैकशास्त्रत्वेन कर्मावबोधस्य पूर्ववृत्तत्वसंशये सम्भवत्यपि फलजिज्ञास्यभेदादिना अथशब्दस्य न कर्मावबोधानन्तर्यार्थकत्वं विवक्षितमित्युक्तमिति स्पष्टं प्रतीयते। अत एव टीकायां कर्मावबोधस्य पूर्ववृत्तत्ववादिन्योः द्वयोः वृत्त्योरनुवादः कृतोऽस्ति। तत्रापि शास्त्रैक्यमेव निमित्तमुक्तम्। तस्मात् अथशब्दार्थप्रतियोगि यत्किञ्चिद्भवतु। प्रविभक्तभागद्वय शास्त्रैकत्वं तु सर्वसम्मतमिति निष्कर्षः ॥ मीमांसकाभिप्रेतं शास्त्रैकत्वं तु सर्वैरेव वेदान्तिभिः प्रत्याख्यातव्यमिति विवेकः ॥

टीकायां पञ्चपादिकायां तृतीयवर्णकेऽयं वृत्त्यन्तरद्वयानुवादः— "कर्मणामधिकारपरम्परया शब्दतो वा संस्कारतया वा, यथाविभागं

तादर्थ्यावगमात् निश्श्रेयसप्रयोजनत्वाच्च आनन्तर्यवचनोऽधिगतादन- रम्" इत्येकं वाक्यम् । तथा—"तत्राथातश्शब्दौ प्रथम एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्य अनन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः । अत इति पूर्वनिर्दिष्टस्यैवार्थस्य हेतुतामाचष्टे ब्रह्मजिज्ञासां प्रति" इत्यपरं वाक्यम् ॥

(क्रमशः)

लक्ष्मीपुरं श्रीनिवासाचार्यः.

# उपनयनमीमांसा.

ॐ—ध्यायंध्यायं परंब्रह्म स्मारंस्मारं विदां गिरः ।
हितायोपनये किञ्चिद्विचारः क्रियते मुदा ॥ १ ॥

उपनीतपित्रुपनीतेन यथाविध्यूढासु स्वेनपत्या सवर्णासु स्त्रीषु ब्राह्मणक्षत्रियवैश्यानां मातापितृसमानजातीयाः उत्पद्यन्ते। तदुक्तंमनुना—

"सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेया स्त एव ते" इति ।

एवंचोढयां ब्राह्मण्यां पत्या ब्राह्मणेनोत्पादितस्य, क्षत्रियायां पत्या क्षत्रियेणोत्पादितस्य, वैश्यायां पत्या वैश्येनोत्पादितस्य क्रमेण ब्राह्मणस्य क्षत्रियस्य वैश्यस्य च—

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुतौ ब्राह्मणपदस्य द्विजोपलक्षकत्वेनोपनयनेन विना षडङ्गानां वेदानामध्ययने चाधिकारसिद्धेः किमनेनाजागळस्तनवदप्रयोजकेन उपनयनेन । तस्माद्व्यर्थमुपनयनमिति तु न समञ्जसम् ।

"न ह्यस्मिन् विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादृते ॥
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ।" इति मनोः—

"प्रागुपनयनात्कामचारकामवादकामभक्षाः" इति गौतमस्य

"कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम्" इति ॥
मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तत्रास्य माता सावित्री, पिता त्वाचार्य उच्यते" इति—

च मनोश्च वचनैरनुपनीतस्य स्वकर्तृकत्वेन प्राप्तश्राद्धादन्यत्र वेदमन्त्राणा मुच्चारणेऽप्यधिकारो नेति वक्तव्यम् । यतोऽर्थे कामचारः कामवादः कामभक्षश्शूद्रतुल्य उच्यते ॥

उपनयनोत्तरं त्वस्याचार्यरूपपितृसावित्रीरूपमातृजातत्वेन द्विजत्वाद्वेदतदर्थयोर्वेदाङ्गषट्कस्याध्ययने तदुक्तकर्मानुष्ठाने चाधिकारी भवतीत्युक्तत्वाद्ब्राह्मणेनेत्यत्र द्विजेनेत्यस्याध्याहारेण द्विजेन ब्राह्मणेन निष्कारणः अत्र कारणशब्दस्य फलपरत्वादृष्टफलनिरपेक्षतया षडङ्गो वेदोऽध्येयो ज्ञेयश्च ब्राह्मणेनेत्येष धर्म इति तदर्थः ननूपनयनादिकारणनिरपेक्ष इत्युपनयनोत्तरमेव तदध्ययनादावधिकारो नान्यथेत्युपनयनमावश्यकमेव ॥ तदुक्तं मनुना—

"वैदिकैः कर्मभिः पुण्यैर्निषेकादिः द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेहच ।
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनोद्विजानामपमृज्यते ।
स्वाध्यायेन व्रतै होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" ॥ इति ॥

प्रतिषिद्धविविधसङ्कल्पादिना पैतृकरेतोदोषाद्यत्पापं तथाऽशुचिमातृगर्भवासजं यद्यत्पापं तत्तन्निवृत्तये क्रियमाणैः गर्भाधानादिशरीरसंस्कारैः जातकर्मचौलोपनयनैः संस्कारैः शुचिर्भूत्वा परलोके यागादिफलभाक्, इहलोके वेदाद्यधिकारी च भवतीति तदर्थः ॥

अत एव—"स्त्रीशूद्रद्विजबन्धूनां नवेदश्रवणं मतम्" इति । व्यास आह । अत्र शूद्रशब्देन शूद्रः शूद्रसमश्च गृह्यते ॥

कल्पसूत्राणां मन्वादिस्मृतीनां पुराणादीनां चोत्पत्तेःप्राक् उपनयनसंस्कारस्य तद्भूतानां वेदोक्तेतरकर्मणां च केनाप्यविहितत्वात्तत्संस्कारा-

भावेऽपि वेदाध्ययनं कृतं यथा तथास्माभिरप्युपनयनमसम्पाद्यैव वेदाध्ययनं क्रियते इत्युपनयनसंस्कारानुष्ठानेप्रयासो विफलः ॥

तदुक्तं वेदपुरुषेण—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"

इति ॥

ब्रह्माणं स्वनाभिकमले सृष्ट्वा तस्मै वेदानुपदिदेश" इति तदर्थः। अस्योपनयनमकृत्वैव वेद उपदिष्ट इति स्पष्टं प्रतीयते। इतिन ॥

यतः सर्वधर्मप्रतिपादकस्य धर्ममूलस्य वेदस्य नित्यत्वेनानादित्वात्सर्वदा स्थिते वेदाध्ययनस्य तदध्यापनस्य तदर्थज्ञानानुसन्धानेन तत्तदुपयुक्तोपनयनादिकर्मणां सम्प्रदायाविच्छेदेन प्रवर्तकानां ब्राह्मणक्षत्रियविशां सर्वत्रभरतखण्डे वंशपम्परया स्थितेश्च तदनुमत्या द्विजानामुपनयनोत्तरमेव वेदाध्ययनादिकं सर्वदा प्रवर्तमानमभूदेव। अन्यथोपनयनरहितस्य ब्रह्मणः वेदोपदेश इत्यभ्युपगमे तेनापि स्वसृष्टेभ्यस्तथैव वेद स्युपदिष्ट इत्यभ्युपगन्तव्यं स्यात्। उपनीतस्यैव वेदाध्यापनं कार्यं नान्यस्यैवमादिवेदविहितकर्मातिक्रमेण उपनयनसंस्कारप्रयोज्यफलविरुद्धनरकोत्पादकपातित्यमपरिहार्यं स्यात्। तदुक्तंयाज्ञवल्क्येन—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति।
(पतनं=द्विजातिकर्मभ्योहानिःपतनम्" इति गौतमः) ॥

एवं च ब्रह्मणे उपनयनं कृत्वैव तज्जनकेन वेद उपदिष्ट इत्यनुमातव्यम्।

"पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः" ॥

इत्यादौ ब्रह्मा प्रतिभातवेदोऽभूदित्युक्तेः ब्रह्मणे वेदोपदेशो न कृत इति तु

न। उपनीतस्यैव वेदाध्ययनाधिकार इति तद्रहितस्य तदधिकारो नेति च पूर्वोक्तस्मृतिवचनबलेन तज्जनकेनोपनयनसंस्कारोऽपि कृत इत्यनुमानात् ॥

विष्णुनाभ्युद्भूताय ब्रह्मणे स्वयं सृष्टाय वेदा उपदिष्टाः ॥

तदुक्तं श्रुत्या—

"यो ब्रह्माणं विदधाति पूर्वं ।
यो वै वेदांश्च प्रहिणोति तस्मै" ॥ इति ॥

प्रागुक्तरीत्या वेदोपदेशाधिकारी उपनीत एव स्यान्नान्य इति निर्णयेन ब्रह्मणोऽप्युपनयनं कृत्वैव वेदा उपदिष्टा इति वक्तव्यम्। तच्चायुक्तम्। ब्रह्मणो यो जनकः स न ब्राह्मणः न क्षत्रियः न वैश्यो वा। स मातापितृशून्यः। केनाप्यनुपनीतः। न यथाविधि श्रियोपनीतः। ब्राह्मणेन क्षत्रियेण वैश्येन वा उपनीतपित्रा स्वसजातीया यथाविध्यूढा या तस्यां गर्भाधानादिसंस्कारेणोत्पादितो यस्तस्यतत्तत्पित्रा ब्राह्मणे न— क्षत्रियेण वैश्येन वोपनयनस्योक्तेः तस्मिन् तस्मिन् वयसिकार्यमितिनियमान्नास्य महाविष्णोर्ब्रह्मण उपनयने अधिकारो भवितुमर्हति। एवं च ब्रह्मणः उपनयनं कृतमिति कथं कल्प्यते इत्याक्षेपो न युक्तः ॥

सर्वेषां सृष्टिस्थितिसंहारकारणस्य सर्वनियामकस्य स्वतन्त्रस्य वेदरूपस्य (=वेदपुरुषस्य) नित्यशुद्धबुद्धमुक्तस्वभावस्य वशवर्तित्वेन तन्नियामकान्तराभावेन तदतिरिक्तविषये एव वेदशास्त्रीयनियमानां तद्धितार्थं तदहितपरिहारार्थं च कल्पनेति ब्रह्मण उपनयने तदधिकारो निर्निरोध इत्यभ्युपगन्तव्यमिति दिक् ॥

गायत्र्या ब्रह्म प्रतिपाद्यत इति उपासकेन ब्रह्म गायत्र्या उपासितव्यं भवति। तत्रचाधिकारी चित्तशुद्धिसम्पत्त्या यः साधनचतुष्टयसम्पन्नः (=नित्यानित्यवस्तुविवेकसम्पन्नः, इहामुत्रार्थफलभोगविराग-

सम्पन्नः (=विरक्तः), शमदमोपरतितितिक्षाश्रद्धासमाधानसम्पन्नः मुमुक्षासम्पन्नः तादृशस्यैव द्विजस्य श्रवणमनननिदिध्यासनरूपोपासनास्वधिकारात्स एवोपनेयः न सर्वो द्विजोऽष्टमादिवयस्कः । तादृशश्च जन्मान्तरीयपुण्यपरिपाकवशेन स्वस्याष्टमादिवयःप्राप्तिसमयाभ्यन्तरे एव नानारूपेण क्लिश्यमानानां जनानां क्षीयमाणानां नश्यतां सर्वेषां पदार्थानां महात्मनां चित्तशोधकसदाचारसम्पन्नानां शिष्टानां च दर्शनेन चित्तशुद्धिं सम्पाद्य साधनचतुष्टयसम्पन्नः स्यादिति शङ्का न युक्ता—

"जन्मगर्भाष्टमे राजन् व्यतिक्रम्य विदन्नपि ।
गौणकालेऽपि पुत्राणां व्रतबन्धं यदा चरेत् ॥
तदा पिता महापापमवाप्य रघुनन्दन ।
सपुत्रः पापकर्मा स्यादुभौ तौ पापसम्भवौ ॥
यदि कामादष्टमाब्दं लङ्घयित्वा चरेद् व्रतम्[1] ।
नवमे तप्तकृच्छ्रं स्याद्दशमेचोभयं स्मृतम् ॥
एकादशद्वादशौ वाप्यतिक्रम्यैन्दवं[2] चरेत् ।
असम्भाष्यो ह्यपाङ्क्तेयः सर्वधर्मबहिष्कृतः ॥
ततः परं यदीच्छेत्तु द्विजन्मत्वं पिताऽऽत्मजे ।
कृत्वा स्वयं पुनः कर्म[3] चरेच्चान्द्रायणत्रयम् ॥
पुत्रस्य देहशुद्ध्यर्थं कुर्याद्गोमुखसम्भवम् ।
प्राजापत्यत्रयं कृत्वा मौञ्जीबन्धं समाचरेत् ॥
अन्यथा पतितं विद्यान्न कर्मार्हो भवेदिह ॥

क्षत्रियस्य द्वाविंशतिवर्षातिक्रमे वैश्यस्य चतुर्विंशतिवर्षातिक्रमे चैवमेव द्विगुणं प्रायश्चित्तं कृत्वा उपनयनं चरेत्"

---

1 व्रतं=प्राजापत्यकृच्छ्रम्. 2 ऐन्दवं=चान्द्रायणम्. 3 पुनःकर्म=पुनरुपनयनम्.

इति कात्यायनस्य । तथा—

"यदि कामादष्टमाब्दं लङ्घयित्वा चरेद्व्रतम् ।
नवमे तप्तकृच्छ्रं स्याद्दशमे तच्च कायिकम् ॥
एकादशे द्वादशे वा व्यतिक्रम्यैन्दवं चरेत् ।

तत आषोडशाद्वर्षादैन्दवत्रयमेव च" ॥ इति स्मृतिमुक्ताफले वैद्यनाथदीक्षितस्य च वचनैरष्टमादिवर्षवयस्यैवोपनयनाकरणे भिन्नाभिन्नप्रायश्चित्तोक्तेः---

"आ षोडशाद्ब्राह्मणस्य, आ द्वाविंशात् क्षत्रियस्य, आ चतुर्विंशाद्वैश्यस्य अतऊर्ध्वं पतितसावित्रीका भवन्ति नैना नुपनयेयुः, नाध्यापयेयुः, न याजयेयुः, नैभिर्व्यवहरेयुः" ॥ इति—

आश्वलायनेन पञ्चवर्षवयआद्युक्तवयोतिक्रमे अध्यापनयाजनपरस्परव्यवहरणप्रतिबन्धकव्रात्यत्वस्योक्तेश्च प्रायश्चित्तान्यनुष्ठाय पञ्चदशवयोभ्यन्तरे प्रायश्चित्ताविषयतत्तन्मुख्यवयस्येव वोपनयनं कार्यम् । एवञ्च यथा काशीयात्रार्थं गन्ता प्रथमप्रयाणदिन एव काशीं न प्राप्नोति किन्तु क्रमेणैव प्राप्नोति । यथा वा शास्त्राभ्यासे प्रवृत्तः चिरकालाभ्यासेन बहुकालानन्तरं पाण्डित्यमुपगच्छति न तु तदारम्भदिन एव । यथा वा महानिबन्धादिकर्ता गृहनगरादिनिर्माता वा न प्रथमद्वितीयदिने एव तानि निर्माति किन्तु कालान्तरे एव । यथा वा योगाभ्यासेन चिरादात्मसाक्षात्कार मुपगच्छति तथा चित्तशुद्धिसम्पादकानां ब्रह्मचर्यव्रतादीनां यथाकथञ्चित्सन्ध्यावन्दनादेरपि चित्तशुद्धिद्वारा साधनचतुष्टयसम्पत्तिपूर्वकश्रवणमनननिदिध्यासनरूपब्रह्मोपासनायामेव पर्यवसानं स्यात्तथा क्रियमाणानां सर्वेषां वेदाध्ययनादिकर्मणां ब्रह्मोपासनात्वमेवेति सर्वेषामास्तिकग्रन्थानामाशयाभ्युपगमेनादोषात् । तथा तत्पर्यवसानं

च निष्कामनया (=ईश्वरप्रीत्यतिरिक्तैहिकामुष्मिकफलाननुसन्धानेन) विहिततत्तत्कर्मणामविच्छेदानुष्ठानेनैव नान्यथा। तदुक्तंभगवता—

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इति

अनकजन्मसंसिद्धस्ततो याति परां गतिम् इति च ॥

"आचार्यवान् पुरुषो वेद" इति श्रुत्या—

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।

तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।

येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तत्तत्त्वतो ब्रह्मविद्याम्" इति श्रुत्या च श्रोत्रियत्वब्रह्मनिष्ठत्वादिगुणसम्पन्नमेव आचार्यं प्राप्य तदुपसर्पणेनात्मसाक्षात्कारो भवेन्नान्यथेति स्थिते तादृशगुरोरिदानीमतीव दौर्लभ्येन कस्यापि मोक्षो न स्यादेवेति गायत्र्या ब्रह्मोपासनाद्विरक्तिर्नयुक्ता कस्यापीत्याशयेन "अनेक जन्मसंसिद्धः," "बहूनां जन्मनामन्ते" इत्युक्तमिति निश्चित्य स्थेयम् ॥

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इत्युक्त्यनुरोधेन "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतंसमाः" इत्युक्त्यनुरोधेन च येषां केषाञ्चित्कर्मणामनुष्ठानापेक्षया श्रौतस्मार्तकर्माणि निष्कामनया कुर्वाणस्य (=भगवत्प्रीत्यर्थमेव कुर्वाणस्य)—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" ॥

इति भगवदुक्त्यनुरोधेन झडिति चित्तशुद्ध्याऽस्मिन्नेव जन्मनि निकटे एव वा तादृशगुरुप्राप्त्या मुक्तिः स्यात् ईश्वरानुग्रहेण ॥ तादृशकर्मणामननुष्ठानेऽनन्यचित्ततया तदननुष्ठाने वा अनेकजन्मविलम्बः स्यात्। एतदभिप्रायेणैव "यदहरेव विरजेत्तदहरेव परिव्रजेत् ब्रह्मचर्याद्गृहाद्वनाद्वा"

इति श्रुत्या कालविलम्बः प्रतिपादितश्चित्तशुद्धौ। अत्राहश्शब्दो जन्मा- न्तरीय कालस्याप्युपलक्षकः। यस्मिन्यस्मिन् जन्मनि यस्मिन्यास्मिन्नाश्रम यस्मिन्नहनि संसाराद्विरजेत्तदहः परिव्रजेदित्यर्थः। अत एव—

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्" ॥ इति ॥
"गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्" ॥

इति च स्मृतिकर्तृभिर्वेदाध्ययनादिकं गुरुणा कारयितव्यं, गुरोरनुज्ञया ब्रह्मचारी स्त्रियमुद्वहेदिति, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति श्रुत्या "स्वाराज्यकामो राजसूयेन यजेत" इत्यादिश्रुतिभिश्च वेदाध्ययनविवाह- ज्योतिष्टोमादिविधानं कालान्तरे जन्मान्तरे वा चित्तशुद्धिसम्पन्नः साधनचतुष्टयसम्पन्नो भूत्वाश्रवणमनननिदिध्यासनरूपोपासनास्वधिकारी स्यान्नान्यथेति तत्तदाश्रमोक्तधर्मकर्तॄन् बोधयतीति दिक् ॥

काशी शेषवेङ्कटाचलशास्त्री.

# कुन्दमालाविमर्शः.

---

## (अनुवृत्तम्).

कुन्दमालायाः कर्ता धीरनागः प्रथमाङ्कान्ते भवभूतिना सीताद्वारा नमोरघुकुलदेवताभ्यः, नमस्तपोधनेभ्यः, इति संग्रहेण विरचितं देवतावन्दनं स्वकीयग्रन्थस्य प्रथमाङ्के स्पष्टमभिधाय सीतात्यागानन्तरकालिकमुदन्तं रामायणाभिहितं लोकरीतिमनुसृत्य आख्यातुमुपचक्रमे । भवभूतिस्तु रामायणे अनुक्तं गर्भवेदनासहनेन यदा भागीरथीप्रवाहे अपप्तत् तदैव सीता लवकुशाविति दारकद्वयं प्रासूत । भागीरथीभूतधात्र्यौ च शिशुरक्षणादिकार्ये स्वयमेव आगमतां, पाताळं च तां निन्यतुः इति अलौकिकीं प्रवृत्तिं उपकल्प्य आत्रेयीद्वारा विष्कम्भे वर्णयामास। शम्बूकवधार्थं गतश्च रामः पुनः दण्डकारण्यं प्राप्तः अगस्त्याश्रमं च प्रविश्य तदनुग्रहाद्वरं प्राप्य अश्वमेधेन ईजे इति रामायणकथामनुसृत्य नाटके स्वे समुचितकथाभागं समयोजयत्। धीरनागस्तु दण्डकारण्यप्रवेश, शम्बूकवधागस्त्यानुग्रहादीन् रामायणोक्तान् कुन्दमालायां न न्यबध्नात्। केवलमश्वमेधयागाय इतरर्षीणामिव वाल्मीकेरप्याह्वानं तदर्थं गृहीतयज्ञोपकरणानां ऋषीणां प्रस्थानं च समग्रथ्नात्। द्वितीयेऽङ्के वेदावत्या साकं सल्लापे सीतायाः रामे असाधारणीं, स्वत्यागेऽप्यकुण्ठितां परां कोटिं प्राप्तां प्रीतिं प्रदर्शयामास। तृतीयेऽपि सीताविषयिणीं रामनिष्ठां प्रीतिं अनन्यसामान्यां कुन्दमालादर्शनादिना समुज्जृम्भितां प्रादर्शयत् । क्वचित् "नूनं तस्यां दिशि निवसति

प्रोषिता सा वराकी" इति धीरोदात्तस्य रामभद्रस्य व्याहारानन गुणं वराकीति कृपणतालिङ्गितशब्द द्विः प्रयुयुजे। कचित् भवभूति-प्रदर्शितां "सीता—(सोल्लासं) आश्चर्यं जलभरभरितमेघमन्द्र-स्तनितगम्भीरमांसलः कुतोऽपि भारतीनिर्घोषः हरन् कर्णविवरं मन्द-भागिनीं मां झडिति उत्सुकयति" इति वाक्यसदृशं "सीता, कर्णंदत्वा; को नु खल्वेषः सजलजलधरस्तनितगम्भीरेण स्वरविशेषेण अत्यन्तदुःख-भाजनमपि मे शरीरं रोमाञ्चयतीति, कचित् कादम्बरीशैलीमनुसृत्य "सीता (निर्वर्णयति) "अहो दृष्ट इति परितोषः, चिरप्रवास इति मन्युः, परिक्षाम इति उद्वेगः, निरनुक्रोश इति अभिमानः, चिरपरिचित इति अनुरागः, दर्शनीय इत्युत्कण्टा, स्वामीति बहुमानः, कुशलवयोस्तात इति कुटुम्बिनीसद्भावः, अपराधं प्रवेशितास्मीति लज्जा, न जानाम्यार्य-पुत्रदर्शनेन कीदृशीमवस्थामनुभवामि" इति लोकोत्तररीत्या सङ्घटे। अस्मिन्नेवसन्दर्भे भवभूतिरपि एतादृशवाक्यानामनुगुणं "सीता, भगवति, निष्कारणपरित्यागिनः एतस्य नाम एवंविधेन दर्शनेन कीदृशी मे हृद-यावस्था। तमसा जानामि वत्से "तटस्थं नैराश्यादपि च कलुषं विप्रियवशात् वियोगे दीर्घेऽस्मिन् झडिति घटनात् स्तम्भितमिव॥ प्रसन्नं सौजन्यात् दयितकरुणैः गाढकरुणं द्रवीभूतं प्रेम्णा हृदय-मास्मिन् क्षण इव" इत्यादिकं वर्णयामास। कचित्कचित् एत-योर्महाकव्योः रीतिः परस्परं संवदति। कचिदन्यथाऽऽस्ते। भवभूति-महाकविस्तु अतिगम्भीररामभद्रस्योक्तौ, वराकीत्यादि· पृथग्जनो-चितान् शब्दान् न प्रस्फुटयामास। किन्तु "हा देवि देवयजन-सम्भवे, हा स्वजन्मानुग्रहपवित्रितवसुन्धरे, हा पाक्कवासिष्ठारुन्धती-प्रशंसिते, "जनकानां रघूणां च कृत्स्नं यद्गोत्रमङ्गलं, त्वया जगन्ति पुण्यानि, नाथवन्तस्त्वया लोकाः, इत्यादि महोदारां वाक्यसंहतिं,

र्धनागुणगणप्रशंसनचुंचुं प्रयोजयामास । अनेकेषु स्थलेषु अशेष-महाजनश्लाघनार्हाणि महाकवीनामप्युपजीव्यानि, समस्तसहृदयाह्लादकानि, प्रस्तावानुगुणानि—

(१) सतां सद्भिस्सङ्गः कथमपि हि पुण्येन भवति ॥

(२) गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥

(३) न किञ्चिदपि कुर्वाणस्सौख्यैर्दुखान्यपोहति । तत्तस्य किमपि द्रव्यं यो हि यस्य प्रयोजनः ॥

(४) अन्तःकरणतत्त्वस्य दम्पत्योस्स्नेहसंश्रयात् । आनन्द-ग्रन्थिरेकोऽयं अपत्यमिति भण्यते ॥

(५) लौकिकानां हि साधूनां अर्थं वागनुवर्तते ॥ ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥

(६) वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

(७) लतायां पूर्वलूनायां प्रसवस्योद्गमः कुत ॥

(८) व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः न खलु बहिरुपाधीन् प्रीतयस्संश्रयन्ते । विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥

(९) न तेजस्तेजस्वी प्रसृतमपरेषां विषहते स तस्य स्वो भावः प्रकृतिनियतत्त्वादकृतकः ॥

(१०) ऋषयो राक्षसीमाहुः वाचमुन्मत्तदृप्तयोः ॥

(११) ता चावश्यं मातरं मङ्गलानां धेनुं धीरास्सूनृतां वाचमाहुः ॥

(१२) नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥

इत्यादीनि कुन्दमालायां न दृश्यन्ते। किन्तु कुत्रचित् "प्रमाद स्सम्पदं हन्ति प्रश्रयं हन्ति विस्मयः। व्यसनं हन्ति विनयं हन्ति शोकश्च धीरतां ॥" इत्यादीनि त्रिचतुराण्येव पद्यान्युपलभ्यन्ते। प्रायस्स्वभावोक्तिरम्याण्येव पद्यानि आन्तं व्यररचन्महाकविः। भवभूतिमहाकविस्तु मालतीमाधवे "यद्वेदाध्ययनं तथोपनिषदां साङ्ख्यस्य योगस्य च" इत्यादिना सकलशास्त्रपारावारपारीणतां यथा स्वस्य व्याख्यत तथैव वैदिकशास्त्रसम्प्रदायसिद्धानि भाषितानि बहूनि उत्तररामचरिते व्याहार्षीत्। तथाहि—भृशाश्वोपज्ञानां सरहस्यानां जृंभकाद्यस्त्राणां प्रादुर्भावप्रकारं "ब्रह्मादयो ब्रह्महिताय तप्त्वा परस्सहस्रं शरदस्तपांसि। एतान्यदर्शन् गुरवः पुराणास्स्वान्येव तेजांसि तपामयानि" इत्याचख्यौ। न केवलं तदुत्पत्तिक्रमं, किन्तु तादृशानां जृंभकादीनामस्त्राणां साक्षात्कारजन्यं तत्त्वरूपानुभवं च स्पष्टयति। तथा पञ्चमाङ्के सुमन्त्रः—"वत्स, मन्ये कुमारेण जृंभकास्त्रमामन्त्रितमिति" चन्द्रकेतुः—"कस्सन्देहः? व्यतिकर इव भीमस्तामसो वैद्युतश्च प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति॥ अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते नियतममितवीर्यं जृंभते जृंभकास्त्रं" इत्यादिना पञ्चमषष्ठाङ्कयोः. आग्नेय, वारुण, पर्जन्यादीनामस्त्राणां स्वरूपमप्यभिव्यञ्जयति। क्वचित् ऋगादिवेदस्थान् विषयान् स्वीयेषु श्लोकेषूपनिबध्नाति यथा. "सक्तुमिव तितउना पुनन्तः यत्र धीरा मनसा वाचमक्रत। अत्रासखायस्सख्यानि जानतेभद्रैषां लक्ष्मी र्निहिताधिवाचि" इति ऋग्वेदाष्टमाष्टकदशममण्डलस्थः ऋगर्थः (१) "आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयो भूत्॥ भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता नैते वाचं विप्लुतार्थां वदन्ति॥ सिद्धं ह्येतद्वाचि वीर्यं द्विजानां" इत्यादिश्लोकेषु प्रकटीकृतः (२) 'अङ्गादङ्गात्सम्भवसिहृदयादधिजायसे॥ आत्मा वै पुत्रनामासिस-

ञ्जीवशरदश्शतं' इति आश्वलायनगृह्यसूत्रस्थः सौत्रमन्त्रार्थः, "अङ्गा-दङ्गात्प्रसृत इव निजस्नेहजो देहसारः प्राडुर्भूय स्थित इव बहिश्चे-तनाधातुरेव ॥ सान्द्रानन्दक्षुभितहृदयप्रस्रवेणावसृष्टः गात्रं श्लेषे यदमृ-तरसस्रोतसा सिञ्चतीव" इति श्लोके स्फुटीकृतः (३) 'यत्र ज्योतिरजस्रं यस्मिन् लोके स्वर्हितं । यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामाः तत्र माममृतंकृधि' इत्यादि ऋक्संहितानवममण्डलान्तस्थः ऋगर्थः "यत्रानन्दाश्च मोदाश्च यत्र पुण्या हि सम्पदः," "वैराजा नाम ते लोकाः तैजसास्सान्तु ते शिवाः" इत्यादिश्लोके निबद्धः तथा (४) असुर्या नाम ते लोकाः अन्धेन तमसा वृताः ॥ ताग् स्ते प्रेत्याभिगच्छन्ति ये के चात्म-हनो जनाः इत्यादिशुक्लयजुर्वेदीयचत्वारिंशत्तमाध्यायगतः मन्त्रार्थः, "अन्धतामिस्रा हि असूर्या नाम ते लोकास्तेभ्यः प्रति विधीयन्ते । य आत्मघातिन इत्येवं ऋषयो मन्यन्ते, असूर्या नाम ते लोका इत्यत्र प्रदर्शितः । तथा (५) तैत्तिरीयब्राह्मणतृतीयाष्टकस्थानां "योबलोऽ-श्वमेधेन यजते। यदमित्रा अश्वं विंदेरन् । हन्येतास्ययज्ञः । चतुश्शता रक्षन्ति । यज्ञस्याघाताय" इत्यादिवाक्यानामर्थः लवः—दृष्टं, अव-गतं च नूनमाश्वमेधिकोऽयमश्व इति। वटवः—कथं, ज्ञायते? लवः—मूर्खाः पठितमेव हि युष्माभिरपि तत्काण्डं, कथं न पश्यथ प्रत्येकं शतसं-ख्याकाः कवचिनो निषङ्गिणश्च रक्षितारः, अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणां ऊर्जस्वलस्सर्वक्षत्रपरिभावी महान् उत्कर्ष-निकषः इत्यादिवाक्येषु प्रस्फोरितः (६) तथा आश्वलायनसूत्रप्रथ-माध्यायान्तिमसूत्राणां (१) आचान्तोदकाय गां वेदयन्ते, (२) हतो मे पाप्मा, पाप्मा मे हतः इति जपित्वा ओंकुरुतेति कारयिष्यन्, (३) माता रुद्राणां दुहिता वसूनामिति जपित्वा ओमुत्सृजतेत्युत्स्रक्ष्यन्,

(३) नामांसो मधुपर्को भवति भवति ? इत्यंतानां अर्थः "समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियाय अभ्यागताय वत्सतरीं महोक्षं वा पचन्ति गृहमेधिनः तं हि धर्मं धर्मसूत्रकारास्समामनन्ति इत्यादि-वाक्यकदम्बेन विवृतः, तथा हि कृत्स्नसांगवेदाध्यायी श्रोत्रिय इत्युच्यते। स गृहानभ्यागतश्चेत् तत्तच्छाखोक्तेन मधुपर्कविधानेन पूजयितव्यः "दधनिमध्वानीय। सर्पिर्वा मध्वलाभे" इति सूत्राभ्यां, दधिमधुनो-स्संपर्कः मधुपर्क इत्युच्यते, मधुपर्काङ्गत्वेन श्रोत्रियाय गां वेदयन्ते, केचन श्रोत्रियाः अनिवृत्तमांसाः केचन निवृत्तमांसाः, प्रदत्तगोमांसभक्षण-रुचीनां श्रोत्रियाणां हतो मे पाप्मा पाप्मा मे हतः इति मन्त्रजपः, ओंकुरुतेत्यभ्यनुज्ञा च भवति। अयं च कल्पः वसिष्ठमहर्षिणा स्वीकृत इति 'आगच्छतैव तेन महर्षिणा सा वराकी कपिला बलात्कृत्य मडमडायिता' इति वाक्येन प्रदर्शितः। श्रोत्रियः अभ्या-गतः वर्जितमांसभक्षश्चेत तदा स श्रोत्रियः "माता रुद्राणां दुहिता वसूनां, स्वसादित्यानां, अमृतस्य नाभिः। प्रणुवोचश्चिकितुषेजनाय, मागा, मनागां अदितिंवधिष्ट। इति धेनुं प्रशस्य वधं माकुरुतेति बोधिकां ऋचं जपित्वा ओमुत्सृजत इति धेनुमुत्सर्जयति। अयं च कल्पः राजर्षिणा जनकेन स्वीकृत इति 'अद्यैव प्रत्यागतस्य राजर्षेः जनकराजस्य भगवता वाल्मीकिना दधिमधुभ्यामेवनिर्वर्तितो मधु-पर्कः। वत्सतरी पुनर्विसर्जिता' इत्यादिग्रन्थेन प्रदर्शितः। एवं च आश्वलायनमहर्षिप्रदर्शितकल्पद्वयं व्यवस्थितं अनायासेनैव महाकविः स्वग्रन्थे समसूसुचत्। धर्मसूत्रकारोक्तं क्षत्रियब्रह्मचारिणो लक्षणं "कञ्चुकी—नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये, जनकः—एवमेतत्, तथाहि, चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतः भस्मस्तोकपवित्र-लांछनमुरो धत्ते त्वचं रौरवीं॥ मौर्व्या मेखलया नियन्त्रितमधोवासश्च-

माञ्जिष्ठकं पाणौ कार्मुकमक्षसूत्रवलयं दण्डं तथा पैप्पलं" इति पद्येन प्रफुल्लीकृतं । तथा वेदान्तशास्त्रसम्मतोऽप्यर्थः, "विद्याकल्पेन मरुता मेघानां भूयसामपि । ब्रह्मणीव विवर्तानां क्वापि विप्रळयः कृतः, अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति ॥ तेभ्योऽधिगन्तुंनिगमांतविद्यामित्यादौ स्फुटीकृतः, ब्रह्मणीव विवर्ताना-मितिश्लोके विवर्तवादाश्रयणात्, एको रसः करुण एव निमित्त-भेदात् भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्, इति श्लोके पारमार्थिकवस्त्वेकत्वावधारणात् महाकविर्भवभूतिः अद्वैतशास्त्रनदीष्णः इति भाति । एवं दुरूहतत्तच्छास्त्रार्थान् अक्लेशेनैव बालव्युत्पत्तये नाट-केऽस्मिन् न्यभांत्सीत् । इति लोकातिशायि पाण्डित्यं महाकवे-र्भवभूतेः । एतादृशार्थप्रतिपादकानि पद्यानि कुन्दमालायां न दृश्यन्ते । रसाभिव्यक्तिप्रदर्शनपरेषु महाकविषु अयमेव मूर्धन्य इति प्रप्रथममेवामुं सुधियः रसिकशिरोमणिरित्यजीगणन् । तथा हि तृतीयेऽङ्के पुरस्तात् "मुरळा—जानास्येव यथा वधूपरित्यागात्प्रभृति 'अनिर्भिन्नो गभीर-त्वादन्तर्गूढगुरुव्यथः । पुटपाकप्रतीकाशः रामस्य करुणो रसः' इत्या-रभ्य शृङ्गारत्वव्याप्यविप्रलम्भव्याप्यं करुणविप्रलम्भरसं "यूनोरेक-तरस्मिन् गतवति लोकान्तरं पुनरलभ्ये, विमनायते यदेकः तदा भवेत् करुणविप्रलम्भाख्य." इति लक्षणलक्षितं कादम्बर्यां महाश्वेता-दिषु दृष्टं तत्तत्संविधानचातुर्येण वासन्तिकाद्वारा प्रकाशितं रसिक-हृदयोल्लासधुरीणं सीताविषयकं रामनिष्ठं शोकोपस्कृतरत्याख्यस्थायि-भावं, विभावानुभावव्यभिचारिभिः परिपोषयन् आदित आरभ्य आन्तं दोषज्ञानां मम्मटभट्टादीनां आलङ्कारिकाणां सहृदयानां हृदयावर्जनं यथा भवेत् तथा उत्तरोत्तरं रसपरिपोषप्रकारं भवभूतिमहाकविः निरूपयामासेत्यहो कवेर्वैदग्ध्यं । स्थाने खलु "उत्तरे रामचरिते

भवभूतिर्विशिष्यते" इति प्रथया अस्य कवेः विश्वातिशायित्वं। अस्मिन्नेव तृतीयेऽङ्के "रामः कष्टं भोःकष्टं (१) "दळति हृदयं गाढोत्कण्ठं द्विधा तु न भिद्यते वहति विकलः कायः मोहं न मुञ्चति चेतनां। ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्प्रभवति विधिर्मर्मच्छेदी न कृन्तति जीवितं" (२) "हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः शून्यं मन्ये जगदविरळज्वालमन्तर्ज्वलामि॥ सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्मोहस्थगयति कथं मन्दभाग्यः करोमि" इत्यादिपद्यैः शोकावेगप्रकारं "अपि ग्रावा रोदित्यपि दळति वज्रस्य हृदयं" इतिवत् अनिर्वचनीयरीत्या प्रदर्शयन् महाकविर्भवभूतिः रसिकजनशिरोमणिरित्येव भण्यते। अस्मिन्नेवाङ्के "कर्तव्यानि खलु दुःखितैर्दुःखनिर्हरणानि "पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया। शोकक्षोभे च हृदयं प्रलापैरेव धार्यते" विशेषतो रामभद्रस्य बहुप्रकारकष्टो जीवलोकः "इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति। स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभः तदद्याप्युच्छ्वासो भवति ननु लाभोऽपि रुदितं॥" इति रोदनं प्रकृतदुःखनिर्हरणोपायं मन्यमानः प्रजापरिपालनैकतत्परः श्रीरामः "प्रजारञ्जनमेव परमं श्रेय" इति धार्मिकमन्वादिवचनं "युक्तः प्रजानामनुरञ्जने स्याः" इति वसिष्ठादेशं च अनुरुन्धानः अरण्येऽपि रोदनार्थं पौरजानपदान् प्रार्थयते "हे भगवन्तः पौरजानपदाः "न किल भवतां देव्यास्स्थानं गृहेऽभिमतं ततः तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता। चिरपरिचितास्त्वेतेभावाः तथा द्रवयन्ति मामिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते" इति सर्वेषां सहृदयानां हृदये कारुण्यं यथा परां कष्ठां आरोहेत् तथा अनिर्वचनीयचमत्कृतिनिदानानि पद्यानि बहूनि नाटकेऽस्मिन् समग्रथ्नान्महाकविः। एवं सीताया अपि

संविधानान्तरेण रामविषयकं शोकोपस्कृतं रतिभावं च स्पष्टं प्राचकाशत्। अङ्कस्यान्तेऽपि अहो संविधानकं इति स्वकृतसंविधानं बहु मन्यते स्म तमसामुखेन। रसस्य अखण्डत्वमपि प्रसाध्य सीतारामौ प्रति "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि भवन्ति" इत्यादिभगवद्भाष्यकारोक्तिं प्रमाणयन् "अवनिरमरसिन्धुस्सार्धमस्मद्विधाभिस्स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता॥ स च मुनिरनुयातारुन्धतीको वसिष्ठः तव वितरतु भद्रं भूयसे मङ्गलाय"॥ इति मङ्गलमाशंसमानः स्वप्रदर्शितकरुणविप्रलम्भरसे अद्भुताश्चर्यावेशं प्रकाशयति॥

(क्रमशः)

गोपालकृष्णशास्त्री.

# अभिनवसुभाषितावलिः.

---

प्रायस्संस्कृतसाहित्ये परिशील्यमाने तैस्तैर्विश्वविश्रुतैः कविभिर्निर्मितान्याद्यन्तपरिकर्मितान्यखिललक्षणलक्षितानि तत्तत्कविसंगृहीतविद्याविद्योतकानि काव्यनाटकादीनि प्रचुराणि सन्ति। महाकविः श्रीमान् कालिदास इयन्ति ग्रन्थरत्नानि रचयामास, भवभूतिश्चेयन्ति भारविरेकं माघश्चैकं इति च, तत्तदन्तरा न किमपि ते निबद्धमितीव, श्रूयते। विविधकाव्यनिर्माणचतुरः कविः भगवदनुगृहीते पुरुषायुषि कराङ्गुलिनिर्देशसुलभमेकं द्वे त्रीणि वा काव्यानि निर्बबन्ध, नान्यादिति वक्तुं सर्वथा न सङ्घटते। अप्रतिहतप्रतिभासम्भावितः कविस्तदानीं तदानीं सृष्टिवैचित्र्योद्दीपितस्सन्, आत्मानुभूतिं निसर्गैरर्थानुधाविते र्वचोभिराविष्कृत्य यथाऽऽत्मनस्तथा इतरेषामपि परां निर्वृतिमातनोति। एवं कालिदासादिमहापुरुषाणां वाक्परीवाहलीलायितानेतान् प्रकीर्णान् श्लोकांस्तदा तदा सङ्ग्रहरूपेषु सुभाषितग्रन्थेष्वाभ्यन्तरीकृत्य लोके महान्तमुपकारमतन्वन् पुरा वल्लभदेवादयः। यथा सृष्टेस्तथा कवेः, कविकर्मणश्च, आनन्त्यं सिद्धम्। तथा च प्रस्तुतानां प्रकीर्णवाचामविच्छेदः, तासां सूक्तीनां सङ्ग्रहश्च सम्भाव्य एव। तदेतादृशः कश्चित्सङ्ग्रहोऽस्माभिः प्रवृत्तः। परन्तु पुनःपुनः पठनेनास्य सङ्ग्रहस्य नव्यत्वमपह्नुतं माभूदिति प्रथितनाम्नामपि प्रत्नानां कालिदासादिमहाकवीनां भणितिमपहाय. अर्वाचीनानां प्रायोऽचिरादलङ्कृतकर्णाटजनपदानां पण्डितवराणां सूक्तिशकलान्सङ्ग्रहीतुमयमुद्यमः। गीर्वाणविद्यां प्रत्यन्यादृशीं प्रीतिमावहन् सर्वत्र जनपदे तस्याः प्रसारणाय किंकिमकरोत् सः

श्रीमान् विबुधजनमन्दारः कर्णाटकसार्वभौम स्तृतीयः कृष्णराजमहाराज इति नाद्यापि विस्मृतमार्यमिश्रैः। महाराजस्यास्यास्थान्यामसकृत्प्रदर्शितात्मवैदुष्याणां महामहिम्नां पण्डितप्रकाण्डानामुदन्तानद्याप्यनिमिषं सपुलकञ्च श्रृणुमहे। विदुषां तेषां वचनामृतं सम्यक्पिबामः, रसं चानुभवामः। अद्यतावत्तावताकेवलमकृतार्थाः अस्मन्महापाठशालापत्रिकाद्वारा अशेषान् सहृदयानपि तदमृतं पाययिष्यामः। तदेतदाद्रियन्तां तत्रभवन्तो वाचकमहाशयाः॥

॥ १ ॥

त्वमसि रसिकमध्ये मङ्गलस्वानरम्यः
समरमृदितशत्रुः किश्वरम्भारतीच्छुः।
दरधरहृदयोऽहं नेश्वरश्रीर्जितोऽन्यैः
मम वितर समृद्ध्यै मन्दिरं का क्षतिस्ते॥

श्लोकेऽस्मीन् पुरा (एवं किलास्माभिश्श्रुतं) "राजज्ञामातरं" श्रीमन्तं लिङ्गराजमहाशयं प्रति सुगृहीतनाम्नां गरळपुरिशास्त्रिणां मन्दिरार्थं प्रार्थनारूपोक्ति र्हरति नश्चेतः। मन्दिरार्थिनः शास्त्रिणः, समृद्धार्था भवन्ति मन्दिरलाभे, तेभ्यो मन्दिरं दत्वा न कामपि क्षतिमनुभवाति श्रीमान् लिङ्गराजः—इतीममर्थं लिङ्गराजपरेभ्यो विशेषणेभ्यः क्रमात् मन्दिरपदस्थाक्षरत्रयस्योद्धरणरूपेण, शास्त्रिपरैर्विशेषणै स्सह क्रमादेव तत्सङ्गमनरूपेण च शब्दचित्रेण प्रकटयति रसिकाग्रणीः॥

॥ २ ॥

अमा सोमोपेता न भवति दिवा जातु यदि चे-
त्यसद्वादभ्रान्तिं शमयितुममासोमनियमः।

प्रवृत्तोऽयं शश्वच्चलदलकवृक्षभ्रमिजुषां
मृगाक्षीलक्षाणां वदनविधुबिम्बैः परिवृतः ॥

श्लोकोऽयं नदीपूर्वनृसिंहपुराभिजनैः पारुपत्ते गुरुराजार्याभिधानैः कदाचिदमावास्यां नदीमवगाहद्भिरश्वत्थपादमूले आचरितामासोमव्रताः स्त्रियो दृष्ट्वा चाटूक्त्या झटिति निबद्ध इति श्रूयते ॥

॥ ३ ॥

न मातुं शक्यं मे नयनयुगमाळीकरतलै
स्तनुज्योत्स्ना चेयं विघटयति गाढान्धतमसम् ।
सखीनामाहूर्तिं विरचयति सौरभ्यमिति तां
रुदन्तीं तन्माता हसितवदना चुम्बति मुहुः ॥

श्लोकस्यास्य चरित्रमतिमनोहारि । प्रणेताऽस्य न विदितोऽस्माभिः । अस्या महापाठशालाया आदिकाले निशितपाण्डित्यप्रमुदिते विद्वद्वृन्दे ज्ञानार्थं प्रवृत्ते चाहमहमिकयाऽखिलशिष्यवर्गे कदाचिदनेन ललितपदगुम्भितेनाप्यनवगाहितार्थेन श्लोकेन पराजितेषु सर्वेषु रसिकेषु, तदानीं तर्कशास्त्रप्रधानोपाध्यायैः पण्डितरत्नैः बेङ्गळूरु सीतारामशास्त्रिभिः "अनेन नेत्रनिमीलनरूपं बालविनोदविशेषं वर्णयति कविः (Hide and Seek=कण्णामुच्चाले)" इति झटिति व्याहृत्य सर्वेषां मनांसि विशदीकृतानीति श्रूयते । कन्यायाः विनोदविशेषस्यास्यानर्हतां निमित्तीकृत्य तस्यास्सौन्दर्यातिशयो निपुणं वर्णितः कविनेति चित्रम् ॥

॥ ४ ॥

वैदेहि याहि कलशोद्भवधर्मपत्नीं
पृष्टा कथाः कथय यास्त्वमियं तु पृच्छेत् ।

पृष्टाऽपि मा कथय सेतुनिबन्धनं मे
यस्मादियं चुलकिताम्बुनिधेः कलत्रम् ॥

अयं तु पुराऽस्यां महापाठशालायां साहितीमुख्योपाध्यायै श्चित्रकविताविशारदैः चामाराजनगराभिजनै रामाशास्त्रिभिरुदाहृत इति ज्ञायते। भगवतो रामचन्द्रस्यात्मप्रशंसापराङ्मुखत्वमनेन वर्णितमिति विशेषः ॥

॥ ५ ॥

सौमित्रे धनुरानयाशु सशरं सर्वानिमान् राक्षसा
नेकोऽहं विनिहन्मि पश्यतु रणे मत्पौरुषं जानकी।
मां दृष्ट्वा विपिनप्रयाणसमये किं त्वेतिपद्यात्मना
तन्वङ्ग्या यदुदीरितं क्रकचवत्तन्मे मनः कृन्तति ॥

अयमपि तैरेव श्रीमाद्भिः चा ॥ रामाशास्त्रिवर्यैरुदाहृत असीत्। खरादिचतुर्दशसहस्ररक्षोहननकाले श्रीरामचन्द्रस्य वचनमिदम्। प्रियायाः शूलोपमं वचनमनवरतं जागर्ति भर्तुर्मनसीत्यनेन लोकानुभव उदाहृत इति भाति ॥

(क्रमशः)

एच्. एल्. हारियप्प.

## श्रीमन्महाराज संस्कृतमहापाठशाला वृत्तान्तः.

---

### विद्यार्थिपारितोषिकसभा.

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्येत्याद्यनेक विरुदावली विराजमानेषु श्री श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालयतिवर्येषु परमेणानुग्रहेणाऽऽसनमधितिष्ठत्सु, अतीतायां, अस्मन्महाराजस्य श्रीमतः कृष्णराजसार्वभौमस्य राज्यधूर्वहनोत्सवं ज्ञापयन्त्यां, रथसप्तम्यां विभववत्सरानुबन्धिनी वार्षिकपारितोषिकसभा ससम्भ्रमं प्रवृत्तेति मुदाऽत्र किञ्चिद्विज्ञापयामः ॥

शुभदिवसे तस्मिन् सायं सप्तघण्टावादनसमये वादयत्सु वादित्रेषु दिशिदिश्यापूर्यमाणेषु जयनिनादेषु श्री श्रीस्वामिनोऽऽसनमध्यतिष्ठन् । महापाठशालापण्डितै रचितान् गीर्वाणभाषात्मकान् मङ्गलश्लोकान् आस्थानविद्वद्भिः ब्रह्मश्री नञ्जनगूडु श्रीकण्ठशास्त्रिभी रचितानि कर्णाटपद्यानि च विद्यार्थिनौ पपठतुः । तदनु पाठशालाध्यक्षमहाशयाः प्रसक्ते वत्सरे पाठशालायां पाठकपाठयितृअधिकारिवर्गेषु, विद्यार्थिवेतनभोजनवासस्थानेषु, पुस्तकभाण्डागारवाचकशालासु, श्री विद्यागणपतिमहासभानुबन्ध्युपन्यासेषु च देशकालानुगुण्येन वितताान् परिष्कारानन्यांश्च विषयानावेदयन्तीं पत्रिकामपठन् । अनन्तरञ्च श्रीमन्तो विश्रान्तसंस्थानाधिकारिणः बेळवाडि रामस्वामिमहोदयाः संस्कृतविद्यायाः अभ्यसनाभ्यासनविषये महाजनैर्वेदितव्यान् आशयान् अन्यत्रास्यां पत्रिकायां विशदीकृतान विसंवादं व्याहृत्य स्निग्धगम्भीरया गिरा, अतीतिजन्नखिलान् सभास्तारान् । श्री श्री स्वामिनश्च समुचितानि पारितोषिकानि

विद्यार्थिभ्योऽनुगृह्य मिताक्षराभिरप्यमितार्थाभिर्मधुराभिश्च वाग्भिः गीर्वाणवाण्याः, सपरिवारस्यास्मन्महाराजस्य, महापाठशालायाः, सभासदां च श्रीमद्धयग्रीवकृपया मङ्गलान्यनन्तानि सन्त्वित्याशंसन् ॥

अस्मिन्नवसरे, रात्रौ महता कालात्ययेन गृहाभिमुखव्यग्रेषु सभ्येषु, त्वरमाणेषु च कार्यकलापसमापनाय प्रमुखेषु, भासमहाकविप्रणीतं दूतघटोत्कचाभिधानं रूपकं निनाटयिषतां केषाञ्चनोत्साहिनां मध्ये सहसा सञ्जग्राहाखिलानि सचेतसां मनांसि सूत्रधारः । प्रथितयशसो भासमहाकवेर्नाटकस्यास्य कथानिरूपणमसाम्प्रतम् । परन्त्विदमत्र वक्तुमुत्सहामहे यत् कथानेत्रादिभटपर्यन्तमभिनेतारस्सर्वेऽपि स्वस्वानुरूपेणाभिनयेनानन्दयामासुरवहितान् प्रेक्षकवरान् इति । पात्रविशेषे न्यस्तं भासकवे रूपकमेतन्नूनमभजद्गुणान्तरं—अतिमनोहारिणी ललिता च भासस्य सरणिरनेनाभिनयेनाभिव्यक्ता—अहो, साधुकृतं बालैः—साधु मित्र, प्राचीनविद्यार्थिनः ईदृशीं नवरसभावज्ञतां पुष्णन्तीति नन्दामि—महापाठशालायामभिनवोऽयमभिनयक्रमः, आगम्यतामभिनन्दामास्यानन्दस्य हेतुं—अये, कोऽयं घटोत्कचः, तदनुरूप एवासीदस्य कर्म—अरे, किमिदम्? पुराऽस्यां पाठशालायामेतादृशेष्वभिनयादिषु प्रदर्शितस्योत्साहस्य नेदं शतांशमप्यर्हति, जानीमो वयमस्योदन्तम्—इत्यादि विविधैर्वाक्यै स्स्वान्तमसकृदभिदधन्तस्सर्वे गृहमभ्ययुरिति जनश्रुतिः। 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचने'ति भगवदुपदेशं स्मरतोऽप्याचरतोऽपि, बलादस्मानाविश्चकार कोऽप्यानन्दः । मानुषतासुलभोऽयं लघिमा क्षम्यः क्षम्यत इति च प्रतीमः ॥

## सरस्वतीप्रासादविद्वत्सभा.

इदमपरं हर्षस्थानम्—यदस्यां पाठशालायामचिरात्प्रवृत्ता सरस्वतीप्रासादविद्वत्सभाख्या काचन समितिः यत्किञ्चिदनुरूपं कार्यजातं

निरवर्तत काले निर्वर्तयिष्यति चेति। सर्वत्र दयनीयदशामास्थितायां देव वाण्यां तत्र तत्र तन्निवारणाय प्रवृत्तास्वेवंरूपासु समितिष्वियमपि यथाशक्त्युपकरोत्वित्याशयः। संस्कृतविद्यार्थिनः अनिशं संस्कृतभाषामेवाश्रित्य यथा व्यवहरेयुस्तथा सिसाधयिषतीयमस्मत्समेत्यलमात्मवर्णनेन॥

अतीते मासि कालिदासभवभूत्योरन्तरमधिकृत्य तर्कशास्त्रमधीयानाः साहित्यविद्वांस श्शर्के रामस्वामय्यङ्गार्याः, सर्वदर्शनैकमत्यविषये पूर्वमीमांसामधीयानाः वेदान्तविद्वांसः के. गोपालशास्त्रिणश्चोपन्यास्थन्। प्रवेशपरीक्षाकक्ष्याविद्यार्थिनः विश्वेश्वर—गङ्गाधर—नारायणनामकाः शुक्लाम्बरधर मित्यादिश्लोके शुक्लाम्बरधरमितिपदस्य साधुत्वासाधुत्वे, नाटककक्ष्याविद्यार्थिनः सूर्यनारायण—रामचन्द्रभट्ट—श्रीनिवासार्य—साम्बभट्टनामकाः हेत्वभासलक्षणे च "वाक्यार्थविचार" मकुर्वन्। प्रवेशकक्ष्या नाटककक्ष्ययोरेका अन्त्याक्षरीस्पर्धा च प्रवृत्ता॥

ऐषमीय चैत्रशुक्लप्रतिपदि पञ्चाङ्गश्रवणसमये सभाप्रार्थनां सकरुणमङ्गीकृत्य ज्योतिश्शास्त्रप्रधानोपाध्यायाः श्रीमन्तो विद्वांसः करूरु शेषाचार्याः पञ्चाङ्गमधिकृत्य रञ्जकं बोधकं च भाषणमकुर्वत। कार्यजातमेतावदनन्तरायं निर्वर्तयितुं सम्यगुपकृतवतः सम्मेलनाध्यक्षान् महामहोपाध्याय—पण्डितरत्नं लक्ष्मीपुरं श्रीनिवासाचार्यान्, महामहोपाध्याय विद्यानिधि विरूपाक्षशास्त्रिणः, आस्थानमहाविदुषः के. गोपालकृष्णशास्त्रिणः, अपि च तत्तद्भाषणकर्तॄन् वाक्यार्थान्त्याक्षरीषु सहकारिणश्च महाशयान् सादरं वन्दामहे। अन्यमेनं शुभं वृत्तान्तं विज्ञाप्य उपसंहरामः—यदुपन्यस्तसर्वदर्शनैकमत्यानां ब्रह्मश्री गोपालशास्त्रिणां शास्त्रपरिश्रमं सम्मिमानयिषया तदानीं सम्मेलनाध्यक्षपदमलङ्कृतवन्तः ब्रह्मश्री लक्ष्मीपुरं श्रीनिवासाचार्याः स्वप्रणीतं मानमेयरहस्यश्लोकवार्तिकाख्यं ग्रन्थरत्नं तेषां सभामध्ये व्यतारिषुः सर्वेषां

### नववत्सरोपहारः.

अयं च महानानन्दोऽस्माभिरनुभूतः यदैषमीय चैत्रशुक्लप्रतिपदि, अस्मत्पाठशालायां दत्तविद्वत्परीक्षाणां शास्त्रान्तरव्यासङ्गिनां त्रयोविंशति विद्यार्थिनां राजसभाप्रवेशरूपा अपूर्वा प्रतिष्ठा समभवत्! अस्मन्महा-पाठशालाकार्यनिर्वाहकसमितावध्यक्षपदमलङ्कुर्वाणानां सुगृहीतनामधे-यानां विद्यार्थिजनचिन्तामणीनां श्रीमतां रामरायवर्याणां निसर्गेण प्रेम्णा वितीर्णोऽयं नववत्सरोपहारो विद्वज्जनस्य महान्तं सम्मोद-मुदपादयत्। उदतेजयच्च सर्वं शिष्यवर्गं पाठशालायाम्। सम्भाविता एते विद्वांसः गौरवमेतत्सार्थकयितुं सम्यग्यतन्ते। स्वेषामुदात्तवृत्त्या च यवीयसामादर्शरूपा भवन्ति। यवीयांसोऽपि सम्भावनामेनां विष-यीकृत्य व्यासङ्गे द्विगुणीकृतोद्यमा भवन्तीति भूयानयमुपकारश्चिरं स्मर्यते सर्वैः सुरभारतीरसलवोल्लासितान्तरङ्गैः। इत्थं सम्मानिताश्च विद्यार्थिनः महापाठशाला पञ्चाङ्गसदसि सर्वस्यानन्दस्यास्य निमि-त्तभूतं सकलकलाकोविदं विद्वत्कुलकल्पतरुमस्मन्महाराजं भृशं तुष्टुवुः। भूयसी हि प्रीतिर्महाराजस्यास्यां सरस्वतीप्रासादाभिधायां पाठशा-लायाम्॥

'सर्वत्र सम्पदस्सन्तु नश्यन्तु विपदस्सदा।
राजा राजगुणोपेतः भूमिमेकः प्रशास्तु नः॥'

**एच्. एल्. हरियप्प.**

---

सूचना—

सञ्चिकायामस्यां आदौ दिक्कालेत्यादिश्लोकचतुष्टये विनाद्य शिष्टाश्श्लोका विष्णु-पुराणान्तर्गताः। आद्यस्तु श्रीमतो भर्तृहरेश्शतकत्रयस्यारम्भे मङ्गलमाचरतीति विदितचरमेव सहृदयानामिति॥ सं.

तूर्णं दुर्नरपालवर्णनमहादुर्नाटकोपक्रमम्
दोषं शोषयितुं वृषाचलपते[1] तोषं च नेतुं सतः ।
अत्रामुत्र च लब्धुमग्र्यसुमनोयोग्यानि भाग्यान्यमी
पद्माकान्त तव स्तवे भवदवैरार्ताः प्रवर्तामहे ॥ ४

वाचा वाञ्छति यत्तव स्तवमिहाबह्वयापि जिह्वा चिरा-
दाराध्यामि भवन्तमित्यपदिशंस्तेनापराध्यामि ते ।
यद्वासावतिबालवागिति कृपाव्याजाय ते जायते
सन्धत्ते शिशुकैश्शुकैश्च कलितो वर्णोऽपि कर्णोत्सवम् ॥ ५

मालीमस्यमवापिता घनतमःप्रायैर्मुरारे चिरात्
इङ्गालैरिव जङ्गमाधमगुणाभासैरियं भारती ।
तत्तादृग्भिरभिज्ञशङ्करशिरःकम्पस्य सम्पादकैः
गम्भीरैरवदायते तव गुणैर्गाङ्गैस्तरङ्गैरिव ॥ ६

जम्भालम्भनचित्तकम्पनमहाकुम्भाभवक्षोजभृ-
द्रम्भाद्यामरशंफलीदृढपरीरम्भादिकं[2] भावुकम् ।
शम्पालोलमवेक्ष्य तुष्यतु जनः किं पामरेणामुना
त्वं पादाम्बुजचुम्बनं भगवतस्सम्पादयेधामनः* ॥ ७

वेदैर्वक्तुमजादयो गुणगणान्विश्वेश ते नेशते
स्तोतुं तान्मितया गिरा व्यवसितो हास्याय हा स्यादयम् ।
सिन्धुं राघवसेतुनाऽपि तरितुं तं सर्वतो दुश्शकम्
को वा लङ्घयितुं व्यवस्यति कुशस्तम्बे[3]न कुम्भेन वा ॥ ८

---

[1] अ. वृषाचलपतेस्तोषं. [2] अ. रम्भाद्युकम्. [3] ख. स्तम्भेन.

मुग्धे वाणि नृणां गुणाः कतिपये मिथ्यानिबद्धा इति
प्रोत्सिक्ता भगवद्गुणानुकथनारम्भाय किं जृम्भमे ।
आकृष्टाः कतिचिद्वनेषु हरिणा इत्याजिहीर्षामहो
लुब्धो लब्धमदो विधास्यति विधोरङ्के[1] कुरङ्गेऽपि किम् ॥ ९

त्वत्कल्याणगुणामृतार्णवसुधालेशोऽपि लीढो भवं
हन्तीति स्तवविस्तरेष्वपटुता नातीव दोषाय नः ।
आपादा[2]प्लव एव जह्नुदुहितर्यह्नाय शुद्ध्यै भवेत्
तस्या नेतुरगाधवारिषु तलस्पर्शोऽपि नापे[3]क्षितः ॥ १०

सन्दर्भे मम मास्तु सुन्दरतया सन्तोषसान्द्रो बुधः
किन्तु त्वद्गुणलेशपेशलतया सन्तुष्यतु श्रीपते ।
राजानो मणिपेटिकामवहिता रक्षन्ति यत्तत्र नो
पेटी[4]सौष्ठवमेव हेतुरपि तु ख्यातं मणेर्गौरवम् ॥ ११

नाद्यं भूतमहो वहामि शिरसा तत्पादजातं न च
द्वैतीयीकमथत्वदीक्षणभुवश्शौरे तृतीयस्य वा ।
अन्ते नावसमप्यवाप्य जननं तुर्यान्नवापं च मे
किं चाऽहं चरतां गुरुस्तदपि ते स्तोत्रे प्रवर्ते कथम् ॥ १२

ओङ्कारस्य रहस्यमित्यज इति ब्रह्मेति सर्वात्मना-
मात्मेति प्रकृतेः परः पुरुष इत्याद्यस्स्वयम्भूरिति ।
वेदान्तैरवबोधिताय भगवन्विश्वैकजीवातवे
बोधानन्द[5]मयाय सिन्धुदुहितुर्नाथाय तुभ्यं नमः ॥ १३

---

[1] क. ख. विधोरङ्के. [2] अ. आपाता [3] क. ख. नालक्षित., अ.
:. [4] अ. वेदी. [5] ल. मोदानन्द.

यच्चक्षुर्जगतां तदेव निगमास्त्वच्चक्षुराचक्षते
लक्ष्मीनाथ तथापि विश्वमितराद्दश्य[1]स्त्वयं पश्यसि ।
अप्येतच्छतमन्युपावकजनिस्थानं सदा नः पुनः
वक्त्रं देव तव प्रसादशिशिरं हर्षं दृशोर्वर्षतु ॥ १४

तत्तादृक्करुणारसैरविरळै[2]स्त्वन्मानसं शीतलम्
तापानां त्रितयं हरेदिति हरे धैर्यं ममोदञ्चति ।
तज्जन्मा विवृणोति शीतकिरणस्तच्छैत्यमत्युज्ज्वलम्
लिङ्गं कार्यगुणं हि कारणगुणे शंसन्ति निस्संशयम् ॥ १५

नित्याय स्वतनुस्थवारिधिवरापत्याय मृत्युञ्जय-
स्तुत्याय क्षपितप्रणन्तृजनदौर्गत्याय सत्यात्मने ।
इच्छानिर्मितविश्वजन्यवनसंहाराय निश्रेयस-
द्वाराय स्थिरसम्पदे नम इदं नारायणायास्तु ते ॥ १६

दीनानां सुरधेनवे तनुभृतामन्तस्तमोभानवे
मायातूलकृशानवे कलयते मानक्षतिं दानवे ।
निर्धूताखिलकर्मणे विनमतां नित्येन्दिरानर्मणे
तुभ्यं निर्मलधर्मणे नम इदं कुर्मः परब्रह्मणे ॥ १७

पादाम्भोजमहं भजामि भवतो वेदाञ्चलैरञ्चितं
प्रख्यातात्किल पन्नगाचलपते यस्यप्रभावादसौ ।
सिद्धा मूर्ध्नि फणीश्वरस्य पृथिवी शर्वस्य चापो मुनेः
अग्निश्चाक्षपदस्त्रिवर्णजनुषां शुश्रूषकासिस्तथा ॥ १८

---

[1] अ. मितराद्दश्यं, क. मितराद्दश्य स्वयम्, ग. मितराद्दश्यः. [2] क. हृतन्त्व, अ.+ख. रावेहतैस्त्व.

मूर्तीनां तिसृणां परा तु कतमेत्यब्जाक्ष संशेरते
    भ्रान्तिं यान्ति च देवतान्तरपरैर्ये वाङ्मयैस्तामसैः ।
यः पादाम्बु ददाति यस्तदुपसंगृह्णाति गृह्णाति वा
    यश्चैतच्छिरसैव तेषु परमः को वेति पृच्छामि तान् ॥ १९

पर्यङ्कस्तव पङ्कजाक्ष गिरिजा[1]प्राणेशितुर्भूषणं
    चारुत्वच्चरणारविन्दसलिलं चूडापदे मालिका ।
मन्त्रो नित्यजपादृतो ननु भवन्नामैव तद्योपितैः
    पारम्ये भवतो मुकुन्द भुवि कस्संदेग्धि मन्देतरः ॥ २०

नाळीके जननं स्थितिं च भजतो नारायण ब्रह्मणः
    स्थानेऽभूद्रज एव कारणगुणः कार्येऽ[2]भिसूते गुणम् ।
ईशाने पुनरन्धकारिपदभाज्यन्धन्तमस्तात्किल
    श्रीवासे त्वयि सारसत्त्वविभवस्सङ्घाघटीति स्फुटम् ॥ २१

नागेन्द्राद्रिविहारसारसवनस्तोमप्रकाशावहा
    धीरोद्धारपदक्रमा मतिमतां ध्येया सुवर्णाकृतिः ।
पुष्यन्ती निजमौळिना सुमनसा ज्योतिष्मदङ्गोज्ज्वला
    त्रय्येषा सुरपूज्य रज्यति[3]तरां त्वय्येव लक्ष्मीरिव ॥ २२

नित्यापाकृतभी[4]र्नैरत्ययशुभाधारैर्वृतो बान्धवैः
    प्रौढाभस्थिरधीरसन्नभवनस्थायी व्यथाभारहृत् ।
सद्गोष्ठीषु सदा विभानमधिकं प्राप्तश्रितस्त्वां[5] हरे
    त्वत्तुल्यस्त्वदनाश्रितश्च* भगवन्नन्ते तु भङ्गं विदुः ॥ २३

---

[1] अ. गिरिशा, क. अत्रस्थले पत्रं शीर्णम्   [2] अ. कार्येषु, कार्येभि इतिपाठद्वयमपि लिखितमस्ति.   [3] अ. पूज्यतितरां   [4] अ. धी   [5] ख.+अ. प्राप्ताश्रित, ग. प्राप्तःश्रित.

श्रेयस्तोयदसम्प्रदायरसिकच्छायस्सहाय[1]श्श्रियः
चिन्तारत्नसपत्नवीक्षितलवश्श्रे[2]कयितामायतम् ।
यो विश्वेन च गात्रवान् हिमरुचाप्युष्णांशुना नेत्रवान्
सुग्रीवेण सुमित्रवान् कुशलवब्रह्मादिभिः पुत्रवान् ॥ २४

पूर्वं त्वत्पदपांसुना बलिरिपो पूता जलध्यङ्गना
पुंसस्सत्पि सुरापगा वितनुते पूतान्त्सुरापानपि ।
पत्नी योगिवरस्य सा सुरपगा प्राप्ता विशुद्धिं पराम्
तेनेत्यत्र न[3] विस्मयस्स मम किं[4] पापं न लोपं नयेत् ॥ २५

मामाराध्य दुरत्ययं स्वयममी मायापयोधिं तर-
न्त्वित्यालोच्य सहेन्द्रियैरिह वपुस्त्वं चेतनेभ्योऽदिशः ।
तेष्वेके तत एव दुष्कृतशतं सञ्चिन्वते श्रीपते
क्लृप्ते तापशमाय विन्दति सरस्यन्धस्तु पातव्यथाम् ॥ २६

गोविन्देति कृपाकरेति कमलाकान्तेति कृष्णेति वा
काकुत्स्थेति रघूद्वहेति जलदश्यामेति रामेति वा ।
वैकुण्ठेति च चण्डकण्टकवनीदावेति देवेति वा
भक्त्या चेतसि चिन्तयन्प्रतिदिनं श्रेयो न विन्देत कः ॥ २७

कल्याणैकनिकेतनं तदनघं कालाम्बुदश्यामलं
चित्ते नृत्यतु शेषभूधरशिरोरत्नं चिरत्नं महः ।
यस्योरस्यनिशं सुता जलनिधेर्यस्यास्ति तन्मेखला
पार्श्वे यस्य पदे च तत्प्रियतमा यत्तत्र शेते स्वधम् ॥ २८

1 अ. यश्रियः. 2 ग. श्रक्रीयतां 3 अ. स. 4 अ. कं.

दूरादेव निरस्य दुष्टनृपतिद्वाराग्रनित्यास्थितिं
तारावल्लभदुर्लभप्रभमुखं धाराधरश्यामलम् ।
पारावारसुतासखं सुमनसामाराधयामः प्रभुं
घोरापास्तसमस्तदुष्कृतपरीहाराय नारायणम् ॥ २९

कीर्तिं नश्चिरवर्तिनीं क्षितितले पुष्णातु कृष्णाम्बुदः
कश्चित्तापहरो गृहीतकमलः कल्लोलिनीवल्लभात् ।
धिन्वन् जीवनदानतो जगदिदं तन्वन्नर्दानां श्रियं
प्राप्तस्साधुकदम्बजृम्भणकर[1]श्रीवेङ्कटक्ष्माधरम् ॥ ३०

(अनुवर्तन)

---

[1] क. ख. श्री.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

## सम्पादकीयसमितिः.



---

## सूचना.

"मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्धः आनुष्टुभश्लोकरूपेण संगृहीतः सर्वसिद्धान्तसारसंग्रहरूपः परस्सहस्रविषयविभक्तः महामहोपाध्याय पण्डितरत्नं इत्याद्यनेक बिरुदाङ्कितैः श्रीमद्भिः लक्ष्मीपुरं श्रीनिवासाचार्यैः प्रणीतः मुद्रितः प्रकाशितश्चास्ति । मूल्यमस्य (६) षट् रूपकाणि. प्रापणभृतिः पृथगेव.

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारय ॥
न ह्रीदृशं संवननं त्रिषु लोकेषु विद्यते।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3 s.) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः,

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् १] जुलै १९२९ [सञ्चिका-३

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥

(महाकविबाणभट्टः.)

अपूर्वं यद्वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात्सारयति च ।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-
त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयताम् ॥

(श्रीमदभिनवगुप्तपादाः.)

देवानामपि दुर्लभं पदमिदं लब्धं मयोपायतो
छिन्नैः बिल्वदलैः प्रतार्य शिवमित्येवं जनो मन्यते ।
मद्भक्ताङ्घ्रिरजस्स्पृशोऽपि सुलभं क्षुद्रं पदं वेधसो
दत्त्वा सेवक एव वञ्चित इति स्वामिन् भवान् मन्यते ॥

# अन्योक्तिमुक्तावलीप्रबन्धः.

---

श्रीमत्पद्मावतीप्रेमसीम कोमलमानसम् ।
धाम तन्नौमि शेषाद्रिधाम तामरसेक्षणम् ॥ १

स्वस्ति श्रीमन्महीशूरकृष्णराजेन्द्रमौळये ।
स्वस्तरुश्रीळदौदार्यसन्नातविबुधाळये ॥ २

पर्णैः केचन पल्लवैः कतिपये पुष्पैः परे कोरकै-
रन्ये केऽपि शलाटुवल्कलफलत्वक्सारबीजासवैः ।
सम्भूयैकश एव वा क्षितिरुहास्साधूपकुर्वन्ति नः
तत्तत्सङ्ग्रहणोचितावसरतस्तत्तत्पुरस्कार्यता ॥ ३

वातात्कर्षसि शीतिमानमतुलं स्फीताङ्घ्रिनाडीमुखात्
पाताळावधि गाहितादतितरां जाताङ्गपुष्टिस्ततः ।
आतारापथमुच्छ्रितो दशदिशो धूताग्रशाखस्तरो !
नैतादृग्जनिमुत्तमां मनुमहे दाता न चेन्नः फलम् ॥ ४

ऊष्माणः कति निर्जिताः कति पुनस्सोढा न झञ्झानिलाः ?
नासाराः कति वा धृता ? न कतिधाः स्पृष्टा हिमानीकणाः ।
मा गाश्शोकवशं गतच्छदतया निस्स्वोऽन्ततोऽस्मीति च
द्रष्टास्मस्सफलोद्यमां त्वयि महाभागे समृद्धिं पराम् ॥ ५

अत्युच्चागर्म ! दृश्यते फलचयस्त्वत्पत्त्रशाखाश्रयः
कैश्चित्पत्त्ररथैरवार्यगतिभिस्तत्तैरनाकाङ्क्षितः ।

रुन्धेऽस्मान् प्रबला तु कण्टकवृतिर्द्वारं न नीरन्ध्रितं
मोघाशैर्निमिषद्भिरेवमधुना तूष्णीं बहिस्स्थीयते ॥ ६

ये सौरभ्यहृतान्तराः पथिकतावादेन पादेऽलुठन्
येऽश्लाघन्त महत्तरोऽयमिति ते मोदाय वादान्यकम् ।
येऽयाचन्त फलानि येऽप्युदहरन् येऽपूरयंश्चोदरं
ते जीर्णच्छदनावशिष्ट! पनस! च्छायां न नायान्ति ते॥ ७

सौरभ्यं परितो विसृत्वरमपह्नोतुं न कोऽपि क्षमः
प्रख्यातिर्ननु हेमपुष्पक इति त्वद्रूपमाख्याति नः ।
औन्नत्यं तदनन्तगं त्रिभुवनप्रौढागमख्यापितं
श्रेयश्चम्पक! तत् कदाऽपि मधुपायत्तं न ते स्पर्शनम् ॥ ८

कपित्थ! त्वद्वृत्तं सदिति कतिचिद्भ्रान्तमनसो
बहिर्ग्राह्याकारस्फुरणमुदितास्त्वामवशयन् ।
विभिद्यान्तस्सारज्ञगृहुरपि ते मन्मथशिखि-
प्ररूढात्मेति त्वां बहुलगुडघातैरघटयन् ॥ ९

उच्छ्रायं परमं भजस्व महितश्शाखाभिरूढे पदे
भूमानश्चिरमाप्नुया न निपतेद्वाताभिघातादिभिः ।
माकन्दद्रुम! मा स्म गाः स्मयमये सत्सौमनस्योदये
रस्यप्राज्यफलार्पणेन भवतो न्याय्यं द्विजप्रीणनम् ॥ १०

प्रवाळेऽन्यः पुष्पे त्वपर इतरस्स्यात्फलचये
शैलाटावन्यादृक् त्वचि तु विषमोऽङ्घ्रावपि परः ।
रसस्संलक्ष्येत क्षितिजनिचये निम्ब! बहुशः

निनिन्दुर्देवानां प्रियमविगतौद्धत्यमपरे
परे त्वाचप्रत्यक्षितकठिनबाह्यप्रकृतिकम् ।
वयं विद्याऽऽख्यात् मृदुलसरसस्वच्छहृदयं
प्रवृद्धान्तस्स्नेहं शुभतमफलं लाङ्गलितरो ॥ १२

किं स्वाद्यं मृदुलं फलं तव? सुमं किं वा सुगन्ध्युत्तमं?
किं पर्णं शयनाशनासनहितं? किं वल्कलं कोमलम्? ।
कस्मात् कण्टकसङ्गतेरसुलभस्पर्शोऽसि? बर्बूर! भोः!
कृत्तक्षिप्तशिखो रुणत्सि फलवद्वृक्षोपसर्त्तिं च नः ॥ १३

नो पुष्पैर्वयमर्चितुं सुरभिभिर्नो पल्लवैर्वा नवैः
नो वा पक्कफलैरतीव सरसैश्शक्ता हि रिक्ता नगाः ।
याञ्चा सम्प्रति निष्फलेति पतग! त्वं माऽवमन्यस्व नः
छायामेहि हिमामिमां स्वपिहि भो! विश्राम्य शाखानिलैः ॥

सुक्षेत्रे शुचिबीजतो जनिमगाः त्वत्सौकुमार्यं शुभं
क्षीरास्वादनपोषणच्छदनतो धात्र्या तरो! वर्धितः ।
सच्छास्त्रागमदर्शनात्तगरिमा गुर्वङ्घ्रिसेवाबलात्
लब्ध्वा विष्णुपदैकभक्तिमनघां स्थेयास्सुतैस्त्वादृशैः ॥ १५

स्कन्धेनोन्नतमांसलेन सुतरो! किन्त्वङ्घ्रिणा वोरुणा?
भ्रातस्ते परिणाहिना किमुरसा? नेत्रेण वाऽऽयामिना ।
स्वायत्तां ललिताङ्गं सन्ततयुतां यद्वन्ध्यपुष्पां लतां
भूत्वाऽभूस्सहजन्मनामफलिनश्शोकातिरेकाय नः ॥ १६

आवालोदकसेचनान्निखननात् सारप्रदाद्दोहदात्
नीहारातपवातवर्षणभिदा खादच्छिदाऽपासनात् ।

पुष्टेषु द्रुषु मध्यमस्त्वमफलीभूतोऽप्यहङ्छायया
दोषाऽऽवास्य च तोषयन् द्विजगणान् वन्ध्यं कुजन्म त्यजेः ॥

वायुर्वातु सुखश्शनैरिति मुहुर्लेशोऽवकाशोऽर्पितः
श्लाघाऽकारि शिरस्तिरःप्रचलनैरद्धाऽभिवृद्धात्मना ।
तेनैव प्रसभं प्रभञ्जनदशापन्नेन नुन्ने शिखा-
जालेऽन्तर्ज्वलनावहेन जनितस्पर्धा हि दग्धा नगाः ॥ १८

त्वदायत्ता सत्ता जगति सकलानां सुमनसां
त्वदाधीन्यादन्यादृगिव भविताऽऽमोदगरिमा ।
शिरोलाल्या लौल्यान्न नमयितुमर्हो वयमत-
स्त्यज प्राभञ्जन्यं भज निजसदागत्यभिरुचिम् ॥ १९

इनस्तीव्रालोकस्तपति जगदित्याक्षिपसि तत्-
करस्पर्शाभावे फलपरिणतिर्नैव भविता ।
तदाधीन्येऽध्यक्षं कलय जलमीदृग्गुणयुतं
रसग्राहं पूर्वं तदपि शिशिरात्मत्वमपरे ॥ २०

यस्स्वर्णस्थितिरित्यशृण्म यमिमं न्यद्राक्ष्म पद्माकरं
यत्नाऽस्नाम यतोऽपिबाम वसनं धौतं यतोऽधाम वा ।
यस्माच्चोदहराम जीवनमहो! निस्स्वं निरालम्बनं
श्रुत्वा त्वां विषमस्थितं सपदि निध्यायाऽतिदूयामहे ॥ २१

क यातं गाम्भीर्यं? क नु तव च सारस्यमगमत्?
क वाऽगच्छत् स्वच्छाद्विजविहरणं? क प्रवहणम्?।
यदा हेयाक्रान्त्या विपुलतरगुल्मोदरतया
पदन्यासानर्हं भजसि ननु! वैरूप्यमिह भोः ॥ २२

कः पत्रं व्यलिखन्मराळवितते: ? को वाऽऽह्वयत्सारसान् ?
क्रौञ्चान् त्सन्दिदिशे नु को ? व्यधित कः कारण्डवामन्त्रणम् ? ।
कासार ! स्वयमागता घनरसप्राचुर्यमालोक्य ते
लब्ध्वा मध्वमृतं सकन्दमनिशं शंसन्ति नादैः कलैः ॥ २३

प्रमाद्येः कासार ! त्वयि तु बहु वारस्त्रिय इमाः
धुनी: पश्ये: कूलङ्कषकुटिलजालप्रसरणाः ।
दृढाश्मप्रायात्मा त्वमसि तदपि च्छिद्रकरणात्
हरेयुस्त्वत्स्वर्णस्थितिमभिसरेयुर्जलनिधिम् ॥ २४

अगाधः क्षोणीभृत्कटकपरिवीतः कतिपय-
द्विजज्ञातः पद्माऽऽकर ! भुवि न विख्यातिमगमः ।
तदेतच्छ्रेयस्ते ननु ! मदकलैर्यत् करिकुलै-
रलुप्तस्वर्णश्रीनिधिरकलुषात्मा विलससि ॥ २५

खले ! नदि ! रजस्वले ! जहिहि गर्वमुच्चैस्स्तन-
प्रवृद्धिजमशृण्म ते कलुषितान्तरङ्गस्थितिम् ।
विपन्नमिह दुर्विपाकममवेक्ष्य यं कञ्चन
द्रुता वयमनन्तिके न पदमश्मिहे स्पन्दितुम् ॥ २६

पार्जन्यप्रतिमार्चनाः कतिविधाः शाकाः कियन्तो जपाः
वीरुण्यः कति पूजनाः कति पुनर्वैभाण्डकिप्रार्थनाः ।
आप्लावाः कतिथा शिवस्य कलशै रच्छाः क्रियच्छान्तयः
ताटाकोदरपूरणे व्ययकरस्त्वेकोऽधिरोको श्रमः ॥ २७

स्वाराजोद्धरणाय लोकजननी श्रीराविरासीदिति
चौरासीत्पदमुत्तमामृतमुजामैरावतोऽभूदिति ।

पारावार! तथा तवास्त्ववितथा पौराणिकी या कथा
वारामेककबिन्दुमप्यापिबते धीराय सा रोचताम् ॥ २८

भर्तः! सागरराज! किन्नु भवतो न्याय्यं तदेतत् सुधा-
प्रायं तोयमपेयमारचयसे दूरात् स्वदाराहृतम् ।
इत्याक्षेपकृतो विलोक्य सरितो वक्त्र्युत्तरं सत्तरं
मा भूत्सङ्गतिरङ्ग! तिष्ठत भृशं स्वैरा मद्दारादिति ॥ २९

प्रजादोषोपेक्षिप्रकृतिदुरभिप्रायविवश-
प्रभुस्वच्छन्दत्वप्रहतसुकृतक्रोधिनि विधौ ।
प्रदत्तानावृष्टौ प्रकटितलपङ्के च सरसि
प्रणाळी प्राध्वानां प्रथमपरिवादं प्रसहताम् ॥ ३०

स्वाभिख्या हि बिभर्ति गोरसपयःक्षीरामृताद्या इति
स्वस्मिन्नन्तरयांबभूविथ मनाङ्नचानुषक्तं जलम् ।
हे! दुग्धास्य तु भूरिसङ्गतिरपाजह्देऽवदातात्मताम्
चक्रे त्वय्यपि नीरसत्वमधुना नीते यदस्वीयताम् ॥ ३१

सुरम्याद्या साऽऽश्रीद्युतिरहह मालत्यपि तप-
स्थिता कैतक्याऽऽसीन्नभसि विसरन्त्यां तु शरदि ।
धृता सारस्याभा सपदि सकलानां सुमनसां
हिमानीपातोऽसौ पविहतिसमानीभवति हा! ॥ ३२

(क्रमशः)

भाग्यपल्ल्यभिजनः श्रीनिवासाचार्यः.

## कुन्दमालाविमर्शः.

---

(अनुवृत्तः)

"एकोरसः करुण एव निमित्तभेदात् भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् । आवतबुद्बुदतरङ्गमयान्विकारानम्भो यथा सलिलमेव हि तत्समस्तम्" ॥ इत्यनेन ॥ अस्य श्लोकस्य भावः अतीव निगूढ इति जिज्ञासुजनोपायोगाय संग्रहेण सम्यक्प्रदर्श्यते । शृङ्गार एक एव रस इति शृङ्गारप्रकाशकारादीनां मतं, करुणादयस्तु न रसपदवीमारोढुं प्रभवन्ति दुःखाद्यात्मकचित्तवृत्तिपरिपोषितत्वात् इति, तत्र "अष्टौ नाट्ये रसास्स्मृता" इति तौर्यत्रिकसूत्रकारेण षष्ठाध्याये शमवर्जानामष्टरसानां रूपकेषु अनुशासनात् "मुनिना भरतेन यः प्रणीतः युवतीष्वष्टरसाश्रयः प्रयोगः" इति महाकविकाळिदासेनापि शृङ्गारादीनां अष्टानां नाटकोपयोगित्वकथनात् एक एवेति निर्धारयितुं न शक्यते । "निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रस" इति मम्मटभट्टोक्त्यापि श्रव्यकाव्येषु नवमस्य शान्तरसस्याप्यङ्गीकारस्सार्वजनीन इति नवरसत्वं सर्वसम्मतम् । तत्र रसस्वरूपं भरतमुनिः "विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्ति" रीति सूत्रेण निरूपयामास । एतत्सूत्रस्थसंयोगनिष्पत्तिपदयोरर्थभेदमाश्रित्य स्वस्वाभिमतं व्याख्यानं भट्टोद्भट—श्रीशङ्कुक—भट्टनायक—अभिनवगुप्तपादादयः प्राचीनाः, नव्यास्तदेकदेशिनश्चालङ्कारिकाः सम्यक्प्रकट्यकार्षुः । तेषु आलङ्कारिकाभिनवगुप्ताचार्यमतरीत्या रसाविर्भावप्रकारः प्रदर्श्यते । तथा हि, लोके सर्वस्यापि जन्तोस्सुखं मे भूयात् दुःखं मे मनागपि मा भूदिति पण्डित-

पामरसाधारण्येन ज्ञानमुदेतीति विदितमेवैतत्सर्वेषां। तत्र सुखसाधने-ष्वन्विष्यमाणेषु स्रक्चन्दनौदनधनललनादिपदार्था एव सुखसाधना इति सर्वो लोकः प्रत्यहं तदन्वेषणे प्रयतमानो दरीदृश्यते। धन-कनकचन्दनललनादिपदार्थाः नैयत्येन सुखं निर्वर्तयन्तीत्यञ्जसा ज्ञातु-मपि न शक्यते। कुत इति चेत् धनकनकललनादिपदार्थाः स्वं लभमा-नानां सुखं कदाचिज्जनयन्ति अविन्दतां च दुःखमुत्पादयन्तीति निरू-पितानां धनकनकललनादीनां सुखसाधनत्वं कादाचित्कमिति दुःखो-दर्कमिति च तत्वतो विज्ञाय दुःखासम्भिन्नैकान्तिकसुखप्राप्तये साधना-न्यन्विष्यमाणानि वेदशास्त्राणि निरतिशयनित्यसुखबोधनाय प्रभवन्तीति सिद्धं भवति। एवं च यथा निरतिशयनित्यसुखलाभाय ऋग्वेदादिवेदाः धर्मब्रह्मबोधककर्ममीमांसाशास्त्रं च विपश्चिद्भिरजस्रमुपादीयन्ते एवं लोको-त्तरगुणोत्तरनायकवर्णनान्वितानि पुराणानि रामायणादिमहाकाव्यान्यपि ऐहिकामुष्मिकसुखमर्थयमानैः पुरुषधौरेयैरुपादीयमानानि दरीदृश्यन्ते। रामायणादि सत्काव्यानां पुरुषप्रवृत्तिनिवृत्तिबोधकत्वात् "प्रवृत्तिर्वा निवृ-त्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते" इत्युक्तलक्षणलक्षितशास्त्रत्वमव्याहतमेव। एवं च रसालङ्कारगुणपरिपूर्णेभ्यः रमणीयार्थप्रतिपादकेभ्यः महाकविरचितकाव्येभ्यः यशोद्रव्यव्यवहार-शिवेतरक्षत्यादीनि प्रयोजनानि संभवन्त्यपि सकलप्रयोजनमौलिभूतं लोकोत्तरवर्णनानिपुणकाव्यश्रवणसमनन्तरक्षणमवे रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं, काटाक्षवीक्षणादिविलासैरेव कामिनमावर्ज-यन्ती कामिनीव सत्कविरचितकाव्यश्रीरपि व्यञ्जनामात्रपरत्वेन उपस-र्जनीभूतशब्दार्थतया शब्दार्थप्रधानाभ्यां प्रभुसुहृत्सम्मिताभ्यां वेद-पुराणाभ्यां विलक्षणा सती सहृदयहृदयाह्लादकारिणा व्यञ्जनाव्यापारेणैव जनयतीत्यलौकिकसुखसाधनत्वं महाकाव्यस्य सुश्लिष्टं भवति। तादृशा-

लौकिकसुखास्वादः काव्यात्कथं समुपजायत इत्ययमंशः प्रदर्श्यते। लोके रत्याद्यनुमाने अभ्यासपाटववता निरन्तरकाव्यानुशीलनवशात् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यतारूपरसिकतामापन्नानां सहृदयानां समुचितललितसन्निवेशचारुणा महाकाव्येन समर्पितैः तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिः अलौकिकविभावव्यपदेश्यैः ललनादिभिरालम्बनकारणैः, चन्द्रिकामलयमारुतकोकिलालापादिभिरुद्दीपनकारणैः, रोमाञ्चकटाक्षविक्षेपभुजोत्क्षेपादिभिरनुभावैः, हर्षचिन्तासूयादिभिस्सहकारिकारणैश्च सम्भूय प्रादुर्भावितेन अलौकिकेन व्यञ्जनाव्यापारेण ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारानियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः, वासनात्मकतया स्थितः रत्यादिकस्स्थायीभावः तत्कालनिवर्तितानन्दांशावरणाज्ञानेन तत्कालविगळितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा, स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन चर्व्यमाणतैकप्राणः विभावादिजीवितावधिः "नारिकेळजलक्षीरसिकतादळमिश्रणे। विलक्षणो यथा स्वादः भावानां संहतौ तथा॥" इति न्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिव आलिङ्गन् अन्यत्सर्वमिव तिरोदधत् सविकल्पकनिर्विकल्पकविलक्षणसंवेदनसिद्धः परिमितापरिमितयोगिसंवेदनविलक्षणः लोकोत्तरस्वसंवेदनगोचरः ब्रह्मास्वादमिव अनुभावयन् अलौकिकचमत्कारकारी प्राग्विनिविष्टवासनारूपः रत्यादिरेव रसः॥ विभावादिविषयसंवलिताचिदानन्दालम्बनायां काव्यव्यापारभाव्यायां रत्यां सुखांशभाने किं मानं इति चेत् समाधावपि तद्भाने किं मानमिति पर्यनुयोगं विदध्मः। "सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यम-

तीन्द्रियं" इत्यादि शब्दप्रमाणं तत्र अवतरतीति चेत् अत्रापि "रसो वै सः रसग्ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्याकारिका श्रुतिः सकलसहृदयानुभवश्च इति प्रमाणद्वयं जागर्ति। एतादृशश्रुति-स्वारस्यात् रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः"। विशिष्टा-त्मनो अस्याः विशेष्यं चिदंशमादाय नित्यत्वं स्वप्रकाशत्वं च सिद्धं भवति। विशेषणीभूतरत्याद्यंशमादाय अनित्यत्वं इतरभास्यत्वं च सिद्ध भवति। इयं च रसचर्वणा तत्तदाकारचित्तवृत्त्यात्मिका। तत्त्वं वाक्यजन्यबुद्धिवत् शब्दव्यापारभाव्यत्वात् शाब्दी। अपरोक्षसुखालम्ब-नत्वाच्च अपरोक्षात्मिका इत्यालङ्कारिकशिरोमणीनां अभिनवगुप्ताचा-र्यपादानां राद्धान्तः। नव्यास्तु लोकोत्तराह्लादजनके महाकाव्ये नाट्ये च महाकविना निपुणेन नटेन च प्रकाशितेषु ललनोद्यानवना-पाङ्गदर्शनहर्षादिषु विभावानुभावव्यभिचारिषु व्यञ्जनाव्यापारेण दुष्य-न्तादौ शकुन्तलादिरतौ गृहीतायां सत्यां. अनन्तरं रसभावादिमयकाव्य-स्वरूपपरिज्ञाननैपुण्यरूपसहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोष-विशेषस्य महिम्ना कल्पितानिर्वचनीयदुष्यन्तत्वावच्छादिते स्वात्मनि अज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डस्समुत्पद्यमानः अनि-र्वचनीयस्साक्षिप्रत्यक्षवेद्यः शकुन्तलादिविषयकरत्यादिरेव रसो भवति। अयं च दोषविशेषजन्यः दोषविशेषनाशे नाश्यो भवति, स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात् सुखव्यपदेश्यः. स्वपूर्वोपस्थितदुष्यन्तादौ गृहीतशकुन्तलारत्यादिना भेदाग्रहात् तद्रतित्वेन एकत्वाध्यवसानाद्वा व्यङ्ग्यः वर्णनीयश्च उच्यते। रत्यादिविशिष्टबोधे विशेष्यतावच्छेदकी-भूतं दुष्यन्तत्वमपि अनिर्वचनीयमेव। एवं च अवश्यकल्प्ये दोषविशेषे तेनैव स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरपि न बाधबुद्धिपराहता। बाधबुद्धिप्र-तिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वस्यैव अनाहार्यत्वस्येव

दोषविशेषाजन्यत्वस्यापि अवश्यं निवेश्यत्वात् । यद्यपि दुष्यन्त इव सहृदयेऽपि रतेस्सुखविशेषजनकत्व अनुभवसिद्धं । दुःखजनकतया प्रसिद्धस्य शोकादेः कथं सहृदयाह्लादहेतुत्वं, प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैव औचित्यं इति सूक्ष्मदृशा निरीक्ष्यते तदा शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि केवलाह्लाद एव यदि सहृदयहृदयप्रमाणकः । तदा कार्यानुरोधेन कारणस्य अवश्यं कल्पनीयत्वात् लोकोत्तरकाव्यव्यापारस्यैव आह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्प्यताम् । यद्याह्लाद इव दुःखमपि प्रमाणसिद्धं, तदा प्रतिबन्धकत्वं न कल्पनीयम् । स्वस्वकारणवशाच्च उभयमपि सेत्स्यति । करुणरसादौ स्वात्मनि शोकादिमद्दशरथादितादात्म्यारोपे यद्याह्लादः सहृदयहृदयसिद्धः, तदा स्वप्नादौ सान्निपातादौ वा स्वात्मनि तदारोपेऽपि स एव आह्लादः स्यात् इत्यापत्तौ क्रियमाणायां समाधास्यामः । अयं हि लोकोत्तरस्य काव्यव्यापारस्य महिमा । यत्प्रयोज्याः अरमणीया अपि शोकादयः पदार्थाः अलौकिकमानंदं जनयन्त्येव । विलक्षणो हि कमनीयः काव्यव्यापारप्रयोज्यभावनाजन्यरत्यादिविषयकास्वादः प्रमाणान्तरजादनुभवात् । अत्र कान्तात्वादिना स्वस्रादेरपि विभावत्वापत्तौ अप्रामाण्यज्ञानानास्कन्दितागम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य विभावतावच्छेदककोटाववश्यं निवेश्यत्वेन शकुंतलादौ अगम्यात्वप्रकारकं ज्ञानं स्वात्मनि दुष्यन्ताद्यभेदबुद्ध्या प्रतिबद्धं भवतीति सर्वं सुस्थमित्याहुः । नव्येष्वेव केचित् व्यञ्जनाव्यापारस्य अनिर्वचनीयख्यातेश्च अनभ्युपगमेऽपि प्रागुक्तसहृदयतारूपदोषविशेषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमदभेदबोधः मानसः काव्यार्थभावनाजन्यः विलक्षणविषयताशाली रस इत्युच्यते । स्वप्नादौ तादृशबोधः न काव्यार्थ-

चिन्तनजन्मेति तत्र न तादृशाह्लादाद्युपपत्तिः । अयं तु रत्यादेः मानसो बोधः लौकिकसाक्षात्कारवत् न विषयसद्भावमपेक्षकः, अपि तु भ्रमः । अयं च मानसो बोधः स्वात्मनि दुष्यन्तत्वधर्मिनावच्छेदककशकुन्तलादिविषयकरतिवैशिष्ट्यावगाही, स्वात्मत्वविशिष्टे शकुन्तलादिविषयकरतिविशिष्टदुष्यन्ततादात्म्यावगाही, स्वात्मत्वविशिष्टे दुष्यन्तत्वशकुन्तलाविषयकरत्योः वैशिष्ट्यावगाही वा त्रिविधो बोधः रसपदार्थतया अभ्युपगन्तव्यः । सर्वेषामपां मूलभूतं प्रमाणं विभावानुभावेति भरतसूत्रमेव । इदमेकमेव सूत्रं तत्तच्छास्त्रसंस्कृतबुद्धिविभवाः पूर्वोक्ता अनेके विपश्चितः बहुधा व्याचख्युः । तथा हि -

(१) विभावानुभावव्यभिचारिणां पूर्वोक्तानां संयोगात् क्रमेण उत्पाद्योत्पादकभावरूपात् गम्यगमकभावरूपात्, पोष्यपोषकभावरूपाच्च सम्बन्धात्, रसस्य निष्पत्तिः—क्रमेण उत्पत्तिः, अभिव्यक्तिः, पुष्टिश्च भवतीति भट्टलोल्लटप्रभृतीनां मतम् ।

(२) पूर्वोक्तानामेव विभावादीनां कृत्रिमानामपि अकृत्रिमतया गृहीतानां संयोगात् अनुमाप्यानुमापकभावरूपात् रसस्य रत्यादेः नटादौ पक्षे निष्पत्तिः अनुमितिरिति श्रीशङ्कुकादयः ।

(३) विभावानुभावव्यभिचारिणां निरूपितानां सम्यक्साधारणात्मतया योगात् भावकत्वव्यापारेण भावनात् रसस्य स्थाय्युपहितसत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिरूपस्य आत्मानन्दस्य निष्पत्तिः भुक्तिः भोगाख्येन साक्षात्कारेण विषयीक्रियते इति भट्टनायकादयः ।

(४) स्थायिनां विभावादिभिस्सह संयोगात् व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् रसस्य निष्पत्तिः अभिव्यक्तिरिति आचार्याभिनवगुप्तपादाः ।

(५) विभावादीनां पूर्वोक्तानां संयोगात भावनारूपदोषविशेषात् रसस्य अनिर्वचनीयदुष्यन्तरत्याद्यात्मनः निष्पत्तिः उत्पत्तिः इति नव्याः ।

(६) विभावादीनां संयोगात् ज्ञानद्रसस्य ज्ञानविशेषात्मनः निष्पत्तिः उत्पत्तिरिति तदेकदेशिनः ।

इत्थं नानाजातीयाभिः मनीषिशेमुषीभिर्नानारूपतया अवसितोऽपि परमाह्लादाविनाभाक्तितया प्रतीयमान प्रपञ्चेऽस्मिन् रसः अलौकिककमनीयितामावहतीति रमणीयः पन्थाः ।

पूर्वोक्तस्य श्लोकस्य भाषार्थस्तु करुणः—करुणविप्रलम्भाख्यः रसः—रसविशेषः शृंगारः. एकः—अभिन्नोऽपि, निमित्तभेदात्—निमित्तानां विभावादीनां भेदात् वैजात्यात् प्रयोजकात्, भिन्नः—विलक्षणचर्वणाविषयः, पृथक्पृथगिव—मिथो विलक्षणानिवास्थितान्, विवर्तान्—परिणामविशेषान्—उपादानसमसत्ताकः अन्यथाभावः परिणामः, उपादानविषमसत्ताकः अन्यथाभावः विवर्त इति वेदान्तिनः. आश्रयते॰ प्राप्नोतीत्यर्थः । अत्रेदं तत्त्वं सीतारामयोरनुरागबहुगुणितायां वियोगव्यथायां अनुवर्तमानायामपि तात्कालिकेन संविधानेन क्षणं अमर्षः, क्षणं हर्षः, क्षणं लज्जा, क्षणं श्रमः, क्षणमालस्यं, क्षणं जडता इत्यादयः विविधा भावाः समुद्भवन्तोऽपि सर्वेऽपीमे स्थायिभूतस्य विप्रलम्भरतेरंगभूताः न स्वतन्त्रा इति । अत्रार्थे निदर्शनमाह यथाजलमेकमेव आवर्तबुद्बुदतरंगमयान्—भ्रमबुद्बुदवीचीरूपान् परिणामान् अनुभवदपि आवर्तादिकं सर्वमपि जलाभिन्नमेव, यथा कटकमकुटकिरीटादयः भिन्नानाकारान् लभमाना अपि कनकाभिन्ना एव. यथा च घटकपालशरावोदञ्चनादयः नामरूपाभ्यां विलक्षणा अपि मृदनन्यभूताः, तद्वत् नायिकानायकयोः परस्परालम्बनकः शोको-

पस्कृतः रत्यादिः विप्रलम्भशृङ्गारः एकस्मिन्नपि हर्षामर्षविषादादि-भावैर्विलक्षण इव भासमानोऽपि करुणविप्रलम्भरसतां न जहाति । "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति न्यायेन कार्यस्य कारणानन्यत्वात्, इति सम्पिण्डितोऽयमर्थः ॥

अत्र केचिद्वीरराघवप्रभृतयो व्याख्यातारो नाटकेऽस्मिन् शोकस्थायिकः करुणरस एव प्रधानं, कठोरगर्भायास्सीतायाः परित्यागेन शोकस्यैवोचितत्वात् । 'अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् शैशवात्प्रभृति पोषितां प्रियाम् छद्मना परिददामि मृत्यवे' इत्यादिना प्रथमाङ्कान्ते अनिर्वचनीयशोकावेशप्रदर्शनात्, तृतीयाङ्कादौ 'पुटपाकप्रतीकाशो रामस्य करुणो रसः' इत्यारभ्य 'एको रसः करुण एव निमित्तभेदात्' इत्यन्तं मध्ये च 'ननु लाभो हि रुदितम्'--'प्रमोदत रुद्यते' इत्यादिना रोदनादीनां शोककार्यत्वात्, सीताविषयिण्याश्च रतेः प्राधान्याभावात्, करुणरसस्यैवात्र प्राधान्यम् । यथा शृङ्गारप्रकाशकारादयः शृङ्गार एक एव रस इति राद्धान्तयामासुस्तथा महाकविर्भवभूतिरपि 'एको रसः करुण एव निमित्तभेदात्' इत्यादिना करुणरस एव नाटके स्वारसिक इति स्वेङ्गितं प्रस्फोरयामास । न च 'वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते' इत्यादिना विरोध स्समुद्भावनीयः, तस्य प्रायिकत्वकथनस्यौचित्यात् । अत एव प्रबोधचन्द्रोदये शान्तस्य प्राधान्यं दृश्यते । न तु वीरशृङ्गारयोरन्यतरस्येत्यादि युक्तिजालमुल्लासयन्ति ॥

तदपरे न क्षमन्ते । नाटकलक्षणकारैः वीरशृङ्गारयोरन्यतरस्य प्राधान्यं इतरेषामङ्गत्वमिति निश्चिन्वानैः करुणरसस्य प्राधान्यं नोररीकृतम् । तथा हि, विद्यानाथः 'वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते' इति प्राह । विश्वनाथोऽपि साहित्यदर्पणे 'एक एव भवेदङ्गी शृङ्गारो

वीर एव वा। अङ्गमन्ये रसा स्सर्वे' इत्यभिदधौ। दशरूपककारोऽपि 'एको रसोऽङ्गीकर्तव्यः वीरः शृङ्गार एव वा। अङ्गमन्ये रसा स्सर्वे' इति बभाषे। एवमन्यत्रापि लक्षणग्रन्थेषु शृङ्गारवीरयोरन्यतरस्य प्राधान्ये कथ्यमाने कथङ्कारं लक्षणग्रन्थपरिपन्थिकरुणरसप्राधान्यं नाटकेऽस्मिन् कविः प्रतिशृणोति? न च शमप्राधान्यं प्रबोधचन्द्रोदये वर्तत इति भणितव्यम्, तत्र वीररसस्यैव प्राधान्यात्। तदानुगुण्येनैव विवेकमहामोहादीनां युद्धप्रसङ्ग उद्भावित इति न दोषशङ्कालेशावकाशः। न च कविरेव 'एकोरस' इत्यादिना करुणस्य प्राधान्यमङ्गचकरोदिति मुकुलितलोचनं नर्तिनर्तनीयम्। तत्रस्थकरुणपदस्य विप्रलम्भशृङ्गारावान्तरभूतकरुणविप्रलम्भशृङ्गारपरत्वात्, तस्य च शृङ्गाररसावान्तरभेदत्वेन नाटकेऽस्मिन् शृङ्गाररसस्य प्राधान्यं समुचितमिति सहृदयहृदयसाक्षिकम्। न च करुणविप्रलम्भशृङ्गारस्य काव्यप्रकाशदशरूपकप्रतापरुद्रीयादिग्रन्थेष्वप्रतिपादनात् तदवान्तरभेदत्वं व्याहतमिति शङ्कनीयम्। काव्यप्रकाशात्प्राचीने रुद्रटालङ्कारग्रन्थे चतुर्दशाध्याये—

'अथ विप्रलम्भनामा शृङ्गारोऽयं चतुर्विधो भवति।
प्रथमानुरागमानप्रवासकरुणात्मकत्वेन' ॥

इति विप्रलम्भं चतुर्धा विभज्य—

'करुण स्स विप्रलम्भो यत्रान्यतरो म्रियेत नायकयोः।
यदि वा मृतकल्पः स्यात्तत्रान्यस्तद्गतं प्रलपेत्' ॥

इति करुणविप्रलम्भरसस्य लक्षणं स्पष्टमभिहितम्। एवं रुद्रभट्टकृते प्राचीने शृङ्गारतिलकेऽपि—

'विप्रलम्भाभिधानोऽयं शृङ्गार स्स्याच्चतुर्विधः।
पूर्वानुरागो मानाख्यः प्रवासः करुणात्मकः' ॥

इति विप्रलम्भं चतुर्धा विभज्य—

'यत्रैकस्मिन् विपन्नेऽन्यो मृतकल्पोऽपि तद्गतम् ।
नायकः प्रलपेत्प्रेम्णा करुणोऽसौ स्मृतो यथा' ॥

इति लक्षणं लक्ष्यं च ..कटमुपवर्ण्य—

'केषां चित्करुणाभ्रान्तिः कारुण्यादत्र जायते ।
एकस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥
स्त्रीपुंसयोर्भवेद्देषः सापेक्षस्सङ्गमे पुनः ।
शृङ्गारवचनप्रायः करुणस्स्यात्स चान्यथा ॥
तस्माच्छृङ्गार एवायं करुणेनानुमोदितः' ॥

इति सपूर्वपक्षः सिद्धान्तः स्पष्टं प्रत्यपादि । तदनुसारेण नवीनो विश्वनाथोऽपि साहित्यदर्पणे तृतीयपरिच्छेदे—

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनरलभ्ये ।
विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥

यथा कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते । पुनरलभ्य इत्युक्तिः शरीरान्तरेण वा लभ्ये तु रतेर्नाशात् उत्कटशोकसम्भवाच्च करुणरस एव प्रभवतीति प्रदर्शनार्था"

इत्याचख्यौ । कादम्बर्यां चन्द्रापीडं प्रति स्वप्रियतमस्य पुण्डरीकस्येतिवृत्तं वर्णयन्त्या महाश्वेताया वाक्येषु प्रथमं करुण एव रसः रतिनाशपूर्वकमुत्कटशोकसम्भवात् । आकाशसरस्वतीभाषानन्तरमेव शृङ्गारः सङ्गमप्रत्याशया रतेरेवोद्भवात् । स्त्रीपुंसयोर्वियोगे जीवित्वज्ञानदशायां वैक्लव्यपोषिताया रतेरेवात्र प्राधान्यात् शृङ्गारो विप्रलम्भाख्यो रसः । वैक्लव्यं तु सञ्चारिमात्रम् । मृतत्वज्ञानदशायां तु रतिपरिपोषितवैक्लव्यस्यैव प्राधान्यात्करुणरस एव । यदा तु

सत्यपि मृतत्वज्ञाने देवताप्रसादादिना पुनरुज्जीवनं कथञ्चित्स्यात् तदालम्बनस्यात्यन्तिकनिरासाभावाच्चिरप्रवास इव विप्रलम्भ एव । न स करुणः यथा चन्द्रापीडं प्रति महाश्वेतावाक्येषु । केचित्तु रसान्तरमेवात्र करुणविप्रलम्भाख्यमिच्छन्तीति रसगङ्गाधरे पण्डितराजेन जगन्नाथेन प्राचीननवीनमते सम्यग्विचार्य सम्यक्समर्थितमित्यलं विस्तरेण ॥

एवं च आलम्बनोच्छेदात् शोकस्य प्राधान्ये रतेरङ्गत्वम् । यथा—

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः' ॥

इत्यादौ । यत्र तु देवताप्रसादादिना आकाशभाषणेन वा आलम्बनस्य सत्वे तदुद्देश्यकरतेः प्राधान्यात् शोकवैक्लव्यविषादादीनां सञ्चारित्वमात्रम् । इति सिद्धान्तं प्रस्फोरयन् महाकविर्भवभूतिः रत्यङ्गत्वेन करुणं तत्र तत्राभिदधौ । न च करुणविप्रलम्भ इति वक्तव्ये कथं करुण इति सन्दिग्धवचनं प्रयुक्तमित्याशङ्कितव्यम् । रुद्रटादिग्रन्थेषु नामैकदेशे नामग्रहणमिति न्यायेन भीमसेन—भीमवत् 'करुणविप्रलम्भः करुण' इति—'प्रवासकरुणात्मकत्वेन पूर्वानुरागो मानाख्यः प्रवासकरुणात्मकः' इत्युभयथा व्यवहारात् कविरपि छन्दोनुरोधात्करुण इत्येव व्याजहारेति सन्तोष्टव्यम् । अत एव कविः विप्रलम्भकरुणस्य लक्षणमनुसरन् सीतायाः पाताललोकगमनं प्रचक्लृपे । एवं च नाटकेऽस्मिन् करुणविप्रलम्भस्य शृङ्गारावान्तरभेदस्य प्रकाशनाद्वीरशृङ्गारयोरन्यतरस्य प्राधान्यं लक्षणकाराभिहितं वर्तत इति न कापि दोषशङ्केति सङ्क्षेपेणार्थः स्फुटीकृतः । यद्यप्यत्र वक्तव्यं बह्वस्ति विस्तरभयान्नेह लेखनी प्रसार्यते ॥

(अनुवर्तते)

**के. गोपालकृष्णशास्त्री.**

## काव्यावलोकनम्

### ( वासुदेवकृत रामकथाविचारः )

---

जयन्ति जगदुल्लासलासिका रङ्गभूमयः ।
महाकविमुखाम्भोजमरन्दा मधुरा गिरः ॥ १

अपूर्वभावैः कविवाग्विलासैः
नानारसोपात्तनवावतारैः ।
हरेर्विहारैरिव कीर्तिसारैः
आमोदिनी सम्प्रति मेदिनीयम् ॥ २ ॥

भोभो, अभिरूपशेखराः, सुविदितमिदं परिशीलितपुरातनकविप्रक-मण्डलीवैदग्ध्यविलसितानां रसोल्लसितपदन्यासभासुरसरस्वतीसमाकलननिम्ननिजान्तरङ्गाणां सुरसरस्वतीसेविनां समेषां सङ्ख्यावताम्— यत्किल बहुविधदुरितौघभरिते संसारचक्रे चक्रवत्परिवर्तमानानां, आध्यात्मिकादिनैकविधोपघातमलीमसम्वान्तानां, निरतिशयानन्दसन्दोहदायिनि वाङ्मयावगाहे विनिविष्टचेतसां सचेतसां, महाकविप्रज्ञाबलनिर्भासितान्नान्यदस्ति सुभाषितामृतान्निर्वृतिस्थानं मनस इति ॥ तानि च सुभाषितानि गैर्वाणीमेवावलम्ब्य भूयसा प्राणप्रतिष्ठामनुभवन्ति । या किल कालिदासमुख्यैः कैश्चन कविप्रख्यैः रसभावसाम्राज्यसीमासमारोपणात्मभिः स्वोपज्ञसत्कारविशेषैः परिष्कृता इदानीन्तनैः अर्धमुग्धैः अनाघ्रातवाणीवैदग्ध्यगन्धैः परिभूतप्रसरापि आत्मीयां सनातनीमयातयामतामद्यापि समुन्मेषयन्ती तामेव दशां सर्वानप्यवगमयितुं समुत्सहते, तादृशी चेयं गैर्वाणी कविमतिभो-

पन्निता विगलितवेद्यान्तरेण आनन्दसुधापूरेण जगदेवाप्याययन्ती कृतार्थयतीत्यपाणिपिहितोऽयमपरोक्षानुभवः। इमामेव चोपास्य प्रज्ञावदग्रगण्याः महर्षिवरेण्याः पाराशरिप्राचेतसादयः विशुद्धविद्यानिबन्धनैरद्यापि यशोभिः विद्योतितवियदन्तराला विराजन्ते। तत्रापि प्राचेतसीया काचन काव्यसरणिः सर्वदाप्यनणीयसीं कां चन निर्वृतिमाददाना सहृदयहृदयसंवादेन संसारमेव मण्डयन्ती सारतरा वरीवर्ति। एवमेव कालिदासादिमहाकविनिबद्धाः प्रबन्धमणयः गैर्वाण्या गलहस्तिकया निरस्यानभ्याशमित्यतां, अचोरहार्यस्यातिमहीयसः सारस्वततत्त्वस्य दवीयसीमपि पदवीं सूक्ष्मेक्षिकया निभालयन्तः, इष्टानिष्टवस्तुषु प्रवृत्तिनिवृत्त्यन्यतरविधानाय कान्तामनुहरन्ते। एवमादिनैकविधप्रयोजनपरिकर्मितस्य प्रबन्धप्रपञ्चस्य काव्यनाटकाख्यायिकादिरूपेण बहवो भूमिकाभेदाः रुचिभेदेन कविसहृदयेभ्यः स्वदन्ते। तेषु प्रबन्धेषु अयमेकतमो रामकथा नाम। सोऽयमाख्यायिकारूपेण सङ्ग्रथितः। अयं च आन्तमवलोकितः परिशीलितश्च यथामनीषम्। अस्य च प्रणेता वासुदेवनामा कविः कस्यां च कालकलायामयमवतीर्णः कवितिलक इति तु न वयं तादृशं किमपि प्रमाणमुपलभामहे, यदनन्यथासिद्धं प्रसिद्धं च भवेत्। तथापि परिशील्यमाना सेयं ग्रन्थसरणिः शब्दशास्त्रपरिनिष्पन्नानेकविधपदप्रचुरतया इतः त्रिशतेभ्यः चतुश्शतेभ्यश्च वा वत्सरेभ्यः प्रागेवात्मसत्तामवगमयितुमीष्टे। संवदति चामुमेवार्थमादिमश्श्लोकः। तत्र हि आदित्यवर्मणो महाराजस्य नियोगेन प्रकृतग्रन्थनिर्माणे स्वप्रवृत्तिमुत्तम्भयति कविः। स च महाराजः नरलोकवीर इति विशेषणावगततादृक्षबिरुदः सप्तदशे शतमाने तदन्तिमभागे वा केरळदेशानध्यासाञ्चक्रे इति तद्देशीयराजकीयचरितनिबन्धेषु प्रथते इति केचिद्विमर्शकाः। अनेन च कविना

सङ्ग्रहरामायणमिति भारथकथेति च प्रबन्धद्वयं प्रणीतमस्तीति तत एव ज्ञायते । प्रबन्धेषु कविकालनिर्णयायैव सूक्ष्ममतयः सूरयोऽद्यापि विप्रतिपद्यन्ते । वस्तुतस्तु ग्रन्थगुणदोषादिविमर्शकाले सहृदयहृदयाह्लादनिबन्धना वर्णनसरणिः, प्रतिभाप्रसाररीतिः, शब्दार्थमयशरीरस्य काव्यस्य गुणालङ्कारादिभिः आहितः परिपोषक्रमः, प्रबन्धान्तरेभ्यः वैलक्षण्यं, इत्यादयः परश्शतं विषयाः विवेचनासरणिमधितिष्ठन्ति । एवमनवसिते समारब्धविमर्शभारे विरलप्रमाणतया अनिर्धारितफलात् अनवसरप्रस्तादनन्तरङ्गाच्च कालनिर्णयान्निवर्तामहे, प्रकृतमनुसरामश्च । सङ्कुचितपदप्रसरापीयं ग्रन्थसरणिः अरीणा गुणैः, हृद्या च पदसन्निवेशैः, रमणीया च रसपरिपोषैः, गम्भीरा च गिरां गुम्भैः, अनवद्यैरतिहृद्यैश्च गद्यैरलङ्कृता नवीनां कां चन मानवीं सृष्टिं कविसहृदयानप्यध्यापिपयिषतीत्यनतिशयोक्तिगम्योऽयमद्धापथानुरोधी वस्तुतत्त्वावमर्शः । किं च पुरातनानां कालिदासभवभूत्यादीनां महाकवितल्लजानां, भवान्तरोपचितसुचरितपरम्परासम्पादितात्मलाभ्या अनुक्षणमपूर्ववैचित्र्यकल्पनापटीयस्या प्रतिभया परिकल्पितेषु काव्यनाटकादिप्रबन्धेषु उत्प्रेक्षातिशयोक्त्यादिबहुविधपरिष्कारपरिकर्मितैव भगवती भारती सहृदयेभ्यः स्वदते । अयं तु प्रबन्धः तादृशीमलङ्कारसरणिमनपेक्ष्यैव स्वाभाविकशोभामेवापेक्षमाणैरप्यनपाक्रियमाणक्रमः कामपि कमनीयतामादत्ते इति महानयमाधुनिकः प्रतिभाप्रासादपरिष्कारः । इतश्च सङ्कुचितशरीरोऽप्ययं प्रबन्धः, भूयसा रामायणैकसमधिगम्यानपि सम्प्रानर्थान् अवगमयितुं क्षमते । यथा—निशाचरपिशाचिकाविविधदशाविकारसंहतिशृङ्गाटिकायाः ताटाकायाः कोपातिरेकरूक्षदशाप्रकाशकैः, तथा विश्वामित्रसत्रपरिरक्षणाविचक्षणे सन्निहितेऽपि भगवति लक्ष्मणसखे दुर्मेधोपचितप्रतिभयकर्मभिः नक्तञ्चरैः व्याख्यातेषु जुगुप्सितविविधकृत्येषु

स्फायमानैः कम्पादिभिः पलायमानानां ऋत्विजां अनन्यसामान्यां भयैकवदान्यां कां चन चित्तवृत्तिमुन्मेषयद्भिः, तथा तत्रैव समग्रनक्तञ्चरकुलधूमकेतुतामात्मनः प्रचिकटयिषोः राघवस्य समीकविधिविधानसरणिमसाधारणी अवगमयद्भिः, तथा जन्मन्मङ्गलसौभाग्यमुद्रासमालिङ्गितविग्रहं सीतापरिग्रहं आहितलक्षणं विविधवीरलक्ष्माणं लक्ष्मणं च अभिसिसारयिषोः निष्ठुरनिबद्धमनसिजेषोः शूर्पणखायाः पञ्चशरपरवशतासम्पादितां कां चन लोलतां प्रकाशयद्भिः, तथा सीतापहारसमये रघुवरसाहाय्यैककक्षपितायुषो जटायुषः नक्तञ्चरपतिनापि समरकर्मधौरेयातां वक्षोविहारिभिः असृक्पङ्कैः अधिगतकलङ्कस्य लङ्काधिपतेः कापटिकपथप्रवर्तनचुञ्चुतां समुल्लासयद्भिः, तथा निशाचरनिकरविशसनविशारदशरासनस्य भगवतः अपांपतिमधिशयानस्य प्रायोपवेशपरुषचेतसः अकूपारमरूकरणमार्गदर्शिना वैश्वानरास्त्रेण परिकर्मितकार्मुकस्य निस्तन्द्रस्य रामचन्द्रस्य कोपावेशदशां तादृशीं विशिंषद्भिश्च विशेषणैः विशदीकृताः तत्तत्समयसमुचितरसनिष्पत्तिनिरन्तराः ते ते अर्थाः जरीहरति सहृदयमनांसि। निसर्गत एव मधुरा रामकथा, तत्रापि महर्षेः वल्मीकजन्मनः प्रतिभाप्रसारपरिष्कृता, अनुस्मरणमात्रेण निखिलदुःखनिराकरणनिपुणा, रसभावनिरन्तरपदबन्धभासुरा चेत्यहो काष्ठा गुणानाम्। अत्र प्रतिपाद्यमानेष्वर्थेषु सावधानभावनापथपरिवर्तिषु रामायणैकसमधिगम्याः सर्वेऽपि भावाः भूमिकान्तरमवलम्ब्य प्रतिबिम्बिता इव सहृदयस्वान्तेषु मृदुमधुरैश्च पदैरुपरचितानि वाक्यानि प्रसन्नगम्भीराणि भूयसा हर्षचरितस्य दशकुमारचरितस्य च मध्यवर्तिनीं काममपि शैलीमभिनिविशन्ते। अयं पुनरपरोविशेषः, यदिह प्रयुज्यमानाः सर्वेऽपि शब्दाः प्रायशः शब्दशास्त्रसमधिगतसंस्काराः श्रवणसमनन्तरमेव कवेः सामर्थ्यविशेष-

समुदञ्चनद्वारां सहृदयानां कं चन प्रहर्षमुपहरन्ति । अयं पुनः वाण्याः परिष्कारः यदुक्तमभियुक्तैः—

रसालङ्कारसाराऽपि वाणी व्याकरणोज्झिता ।
श्वित्रोपहतगात्रेव न रञ्जयति सज्जनान् ॥

इति । एवमादिनैकविधापूर्वतरपरिष्कारपथपान्थैः समुल्लास्यमाना सेयं गैर्वाणी समुत्सहतेतरामितोप्यधिकां काष्ठामाढौकितुमित्यपि महानयं वार्षिकोदयः प्रमोदप्रकृष्टवृष्टिपातस्य । इमामेव पद्धतिमनुसृत्य सर्वेऽपि पण्डितमहाशयाः स्वोपज्ञनिबन्धनैः सन्दर्भैः विरलप्रचारामनां गैर्वाणीं प्रतिष्ठापितप्राणां कुर्युरिति सादरमभ्यर्थयते ॥

इति वेङ्कटार्यसुमतिः महिशूरपुरीशपाठशालायाम् ।
साहित्याध्यापकपदमधितिष्ठन् विमृशति स्म रामकथाम् ॥

— इति शम् —

सङ्गीघट्टाभिजनो वेङ्कटाचार्यः.

# मनस्तत्त्वम्

---

"मन एव मनुष्यणां कारणं बन्धमोक्षयोः" इति सत्यर्थपरिपूर्णा सूक्तिः श्रुतपूर्वैव। अज्ञानाद्बन्धः ज्ञानान्मोक्षः इत्यन्या सूक्तिः तमेवार्थं प्रकारान्तरेणाह। प्रत्यक्षानुमानोपमानशब्दादिभेदेन ज्ञानमनेकविधं इन्द्रियार्थसन्निकर्षादिजन्यं इति न्यायशास्त्रादवगम्यते। तदिदं ज्ञानं बहिरिन्द्रियजन्यमपि विना मनसः एकाग्रतां दुस्साधमिति सर्वेषां विदितमेव। मनसा विषयमन्यं चिन्तयन् मनुष्यः विवृतनेत्रोऽपि पुरस्तात्सर्पन्तं सर्पं न पश्यतीति विदितमेव। तच्च मनः पञ्चविंशतितत्त्वेष्वेकमन्तरिन्द्रियात्मकमिति साङ्ख्याः वदन्ति। सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसाक्षात्कारसाधनमिन्द्रियं मन इति तार्किकाणां मतम्। यच्च "सैकालजि" इति पाश्चात्यविद्वद्भिरभिधीयमानमतिविस्तृतं शास्त्रमधुना श्रूयते तत्र नानाविधाः मनोवृत्तयः सप्रमाणं सदृष्टान्तं विविच्य जिज्ञास्यन्ते। वस्तूपलब्धिः, स्मृतिः उहः, चिन्ता, वेदना, अनुभवः, अवधारणमिच्छाद्वेषौ, हर्षोऽमर्षोऽसूयेत्यादयो ये ये मनोव्यापारा वर्तन्ते ते सर्वेऽपि तत्र जिज्ञास्यन्ते। तत्र व्यवस्थापिताः केचन विषया अत्र विशदीक्रियन्ते.

## अवस्थात्रयम्.

यस्यामवस्थायां मनुष्यः बहिरिन्द्रियैर्विषयान्प्रत्यक्षीकृत्य मनसा अवधारयति सा जाग्रदवस्थेत्युच्यते। यदा स्वप्ने विषयाः ज्ञायन्ते सा स्वप्नावस्थेत्युच्यते। यदा च जनः न किं चिदवगच्छन्निद्राति तदा स सुषुप्त्यवस्थायां वर्तते इति सार्वजनीनो व्यवहारः। यच्च व्यवहा-

रहेतुः ज्ञानं जाग्रदवस्थायां स्वप्ने च प्रविलसति सुषुप्त्यां लीयते तदेव ज्ञानमिति व्यवह्रियते । जाग्रदवस्थायां ज्ञानं नदीव प्रवहति । सुषुप्तेरन्यत्र जनः क्षणमपि न मनोवृत्तिशून्यस्स्थातुं शक्नोति ॥

ज्ञानं च प्रत्यक्षं स्मृतिः अनुभवः इति त्रिधा भिद्यते । यदा जनः नेत्रेण नेत्राभ्यां वा विषयं साक्षात्करोति, घ्राणेन गन्धमवगच्छति, रसनया रसं अवगच्छति, श्रोत्राभ्यां शब्दं श्रुत्वावधारयति, त्वचा विषयान्स्पृष्ट्वा "मृदु कठिनं वा" इति जानाति, तदा तस्य तादृशं ज्ञानं प्रत्यक्षज्ञानमित्युच्यते । यदा पुनः विषयप्रत्यक्षज्ञानानन्तरं दृष्टं घ्रातं आस्वादितं श्रुतं स्पृष्टं वा विषयं "ह्यः स दृष्टः घ्रातः आस्वादितः श्रुतः स्पृष्टो वेति" स्मरति सा स्मृतिरित्युच्यते । यदा च दृष्टं विषयं अन्यस्मै वर्णयति स वर्णनाविषयज्ञानमनुभव इत्युच्यते । स्मृतेरनुभवस्य च क्वचिद्बाह्यविषयज्ञानं मूलं; क्वचिच्च आन्तरमेव ज्ञानं मूलमिति ज्ञायते । प्रत्यक्षीकृता विषयाः यदा स्मर्यन्ते अथवा चिन्त्यन्ते तदा तादृशस्मरणस्य चिन्तायाश्च प्रत्यक्षज्ञानमेव निदानम् । यच्च शिशूनां स्तन्यपानप्रवृत्तिप्राक्कालिकं स्तन्यविषयकं ज्ञानं तदान्तरमेव । न तत्र प्रत्यक्षीकृतविषयानुभवः कारणम् । द्वितीयादिप्रवृत्तेः प्रथमप्रवृत्त्यनुभवः कारणं कथंचिद्भवेत् । प्रथमप्रवृत्तेर्निदानभूतानुभवः प्राक्तनजन्मानुभव एव इति भरतखण्डीया वदन्ति । पाश्चात्यविद्वांसस्तु स मातापितृसम्बन्धजः स इति वदन्ति । न ते जन्मान्तरमभ्युपगच्छन्ति । एवमेव पक्षिणां प्लवनोत्पतननीडादिरचनासु प्रवृत्तिः आन्तरज्ञानजा । कदापि जीवितकालेऽननुभूता विषयाः केषांचित् मनोगोचरा भवन्ति । अत्रापि आन्तरज्ञानमेव कारणमिति पाश्चात्याविद्वांसो वदन्ति ॥

### प्रत्यक्षस्वरूपविचारः.

यदा जनः दूरस्थं कं चन विषयं पश्यति, तदा तस्य विषयस्वरूपज्ञानं न स्पष्टं भवति । प्रथमं तावत् दर्शनानन्तरं स्थाणुर्वा पुरुषो वा? पुरुषश्चेत् परिचितो वा अज्ञातो वा? ज्ञातपूर्वश्चेत् तस्य नाम किम् इत्यनेकविधास्सन्देहाः प्रादुर्भवन्ति । ततश्च स्पष्टदर्शनेन पुरुष इति निश्चये जाते दृष्टस्य पुरुषस्य ज्ञातता नामधेयादिकं सर्वं स्मृत्या अवगम्यते । निकटस्थेऽपि विषये "अयं घटः अयं पटः" इति वस्तुविषयकं विशेषज्ञानं न केवलं दर्शनादेव जायतेऽपि तु स्मृत्या लभ्यते । किं वहुना सर्वमपि प्रत्यक्षं स्मृत्यनुभवशबलितमेव जायते; स्मृत्या अनुभवेन च विरहितं प्रत्यक्षज्ञानमेव नोत्पद्यते इति पाश्चात्यविदुषां मतम् । बौद्धा निर्विकल्पकमेकमेव प्रत्यक्षं, सविकल्पकं तु नामधेय ज्ञानादिसङ्कृतमेव जायते इति वदन्ति ॥

### मनोऽव्यग्रता.

मनसः एकाग्रतां विना न किञ्चिद्ज्ञानं जायते । व्यग्रमनस्केन विषयान्तरनिर्हितमनस्केन वा जनेन पुरस्ताद्विद्यमानमपि वस्तु न साक्षात्क्रियते । मनसः एकाग्रताशक्तिः प्रतिजनं भिद्यते । "घण्टाध्वनिश्रवणानन्तरं दीपमुज्ज्वालये" ति स्वामिना आज्ञप्तः कश्चन पुरुषः घण्टाध्वनिश्रवणानन्तरं एकां विनाडिकां विलम्ब्य दीपोज्ज्वालनाय प्रवर्तते । अपरः विनाडिकाद्वयं विलम्ब्य प्रवर्तते इति मनोवेगैकाग्रतयोः जनानां भूयान्भेदो वर्तते । एतादृशभेदपरीक्षया पाश्चात्यः विद्वांसोऽधुना विद्यार्थिषु बुद्धिपाटवतारतम्यं निश्चिन्वन्ति ॥

### ज्ञानं वार्धिष्णु.

ज्ञानं नैकरूपम् । वयोवृद्ध्या शिरोगतमेदोवृद्ध्या च ज्ञानशक्तिः वर्धते । शिरसि यत्सहस्रारं वर्तते तत् अपरिसङ्ख्यातनाडिका-

### मनोऽव्यग्रतायामारोहावरोहौ.

मनोऽव्यग्रता न कदापि नियतस्वरूपा वर्तते । नाप्येतस्मिन्नेव विषये एकाकारा सा तिष्ठति । प्रथमक्षणे अधिका द्वितीयक्षणे न्यूना तृतीयक्षणे पुनरप्यधिका—इत्येवमारोहावरोहौ कुर्वाणा सा दृश्यते । श्रवणेन्द्रियात्कचिद्दूरे निक्षिप्तस्य घटीयन्त्रस्य टिक् टिक् शब्दाः एकक्षणे स्पष्टं श्रूयन्ते । द्वितीयक्षणे न श्रूयन्ते । तृतीयक्षणे पुनरपि श्रूयन्ते । एतादृशव्यत्ययस्य मनोऽव्यग्रतारोहावरोहक्रम एव कारणम् । चाक्षुषं ज्ञानं विनाडिकात्रयपरिमिते काले पूर्वावस्थातो भिन्नावस्थां प्राप्नोतीति ज्ञायते । भ्रमन्तं श्वेतफलचक्रं विनाडिकात्रयकालानन्तरं द्रष्टा कृष्णफलकमिव पश्यति । एवं श्रावणज्ञानमपि विनाडिकाचतुष्टयानन्तरं पूर्वावस्थातो भिद्यते । स्मरणेऽपि स्मर्यमाणा विषयाः क्षणे क्षणे भिद्यन्ते । कण्ठपाठेऽपि या आवृत्तिः क्रियते तस्यामपि मनोऽव्यग्रता नैकरूपाऽवतिष्ठते ॥

मनोऽव्यग्रतायां इच्छा, शिरस्स्थसहस्रारस्य आरोग्यं, रक्तपुष्टिः, निद्रातन्द्रालस्यादिराहित्यं, अश्रान्तदेहतेत्यादीनि बहूनि कारणानि सन्ति । तीव्रतीव्रतरतीव्रतममनोऽव्यग्रतया शिरस्स्थनाडिकाव्यपाराश्च तीव्रतीव्रतरतीव्रतमा भवन्ति । अत्यव्यग्रमनस्को जनः कतिपयक्षणानन्तरं श्रमात्खिन्नो भवति । इच्छाबलेन जनः मनः विषयावधारणे अव्यग्रं कर्तुं शक्नोति । विषयान्तरध्यानाव्यग्रमनस्को जनः स्वकृतं भोजनमपि कृतमिव नावगच्छति ॥

मनोऽव्यग्रता वस्तुविवेचने कारणम् । "चित्रपटे दृश्यमानानि रूपाणि चत्वारि वा? पञ्च वा, षड्वा?" इति पृष्टो जनः यद्यव्यग्रमनस्कः बाढं पश्यति तदैव यथास्थितं वक्तुं शक्नोति नान्यथेति ज्ञायते । यदा च जनः अव्यग्रमनस्को यं विषयं ध्यायति तमसन्तमपि

पुरस्तात्सन्तमिव पश्यति । अत्र मनोऽव्यग्रतैव कारणम् । अद्भुतरौद्रभीभत्सकराणि वस्तूनि विषयान्तरमग्नमपि मनः हठात्स्वेषु अव्यग्रं कुर्वन्ति । अत एव कवयः नाटकादिषु विरहादिना खिद्यन्तं नायकं अद्भुतभयानकादिभावोत्पादनेन अन्यविषयमभिमुखीकृत्याकर्षन्ति । यथा जनाः स्वोत्कर्षाय स्पर्धन्ते तथैव रागद्वेषादयो भावा अपि स्वोत्कर्षाय स्पर्धन्ते । उत्कटा रागवृत्तिः रागविषये मनोऽव्यग्रं करोति । भयमपि भयप्रदवस्तुविषये मनो बाढमाकृष्य तत्र तदव्यग्रं करोति । "पिशाचः" इति भ्रान्तो जनः यत्र पिशाचः स्वचक्षुर्गोचरो भवति तत्रैव मनोऽव्यग्रं कुर्वाणः पिशाचप्रतिकृतिमसन्तीमपि जाग्रतीमिव निश्चिनोति । तदित्थं मनोऽव्यग्रतायां तीव्रतीव्रतरतीव्रतमा रागादयोऽपि कारणानि भवन्ति । विद्यार्थिनामधीयमानपाठविषये रागश्चेत्तत्र मनोऽव्यग्रं भवति । मनोऽव्यग्रतयाऽधीतः पाठश्च वीर्यवत्तरो भवति । अन्यथा व्यर्थः कालक्षेपश्च भवतीति ज्ञायते । क्वचिदिच्छां विनैव मनोऽव्यग्रं भवति । क्वचिच्च इच्छैव मनोऽव्यग्रतानिदानिका ॥

## बाह्याभ्यन्तरज्ञानानि.

बाह्यप्रपञ्चविषयज्ञानं आन्तरप्रपञ्चज्ञानमिति ज्ञानं द्विधा भिद्यते । यदा जनः अव्यग्रेण मनसा बाह्यविषयान्पश्यति तदा तस्य बाह्यप्रपञ्चविषयज्ञानमुदेति । यदा तु अन्तरेव सुखदुःखेच्छाद्वेषादिहेतून्विषयान् भावयति तदा तस्य आन्तरानुभवो जायते । स्वप्ने जायमानोऽनुभवः अर्धं न सम्पूर्णः इति पाश्चात्या वदन्ति । सुषुप्तौ न किमपि ज्ञानमङ्कुरति ॥

## प्रत्यक्षभेदाः.

प्रत्यक्षं मानसं बाह्यं उदासीनप्रत्यक्षं चेति त्रिविधम् । यदा

जनः मनस्येव विषयान्ध्यायन् बहिः पश्यन्निव चिन्तयति तदा तद्ज्ञानं मानसं प्रत्यक्षमिति पाश्चात्यैरुच्यते । तच्च स्मरणमिति भरतखण्डीया वदन्ति । अनधिगतं पुराननुभूतं वा यन्मनसावधार्यते चक्षुरादिद्वारा तदेव प्रत्यक्षमिति वेदान्तिनः । पुरानधिगतमननुभूतं वा यज्जनः प्रत्येति तत्केवलं निष्प्रकारकं ज्ञानं संविद्वा, न तत्प्रत्यक्षमिति पाश्चात्याः । तस्य "सेन्सेषन्" इति नाम तैर्दत्तं वर्तते । सेन्षेषन्नित्यस्य संवित् इत्यर्थः । यदा मनोऽव्यग्रतापुरस्सरं जनः चक्षुरादिपञ्चभिरिन्द्रियैः घटपटादीन्विषयान्प्रत्यक्षीकरोति तदा तु मनोऽव्यग्रतां विनैव जनः शब्दादीन्विषयान् शृणोति तदा तदुदासीनप्रत्यक्षमिति तैर्व्यवह्रियते ॥

### बाह्यप्रत्यक्षभेदाः.

चाक्षुषं, स्पार्शं घ्राणं रासनं श्रौत्रमिति पञ्चविधेषु प्रत्यक्षज्ञानेषु शुद्धं चाक्षुषं शुद्धं स्पार्शं शुद्धघ्राणरासनश्रौत्राणि च न कदापि सम्भवन्ति । स्पार्शामिश्रं चाक्षुषं घ्राणामिश्रं रासनं च न सम्भवतीति पाश्चात्या वदन्ति ॥

### चाक्षुषम्.

प्रभा रूपं चेति द्वयमपि चक्षुषा गोचरीक्रियेते । विषयस्योपरि प्रत्यवयवपरमाणुदेशे पतितास्सूर्यप्रभाकिरणा वा अन्यप्रभाकिरणा वा प्रतिफलिता नेत्रोपरि पतन्ति । तत्सम्पर्कवशात् नेत्रान्तर्देशे वर्तमानं काचफलकसमानाकारं रेटिनेति पाश्चात्यैरभिधीयमानं नाडिकापटलं स्वस्मिन् तत्तत्किरणसंयोगेन विषयाकारेण विक्रियते; एतन्नाडिकापटलसंयुक्तनाडिकाद्वारा सहस्रारेऽपि विषयाकारसमानप्रदेशे विकृतिरनुभूयते । फोटोग्राफ् नामकयन्त्रे फलके यथा सूर्यकिरणसम्पर्केण विषयाकारसदृशा विकृतिरुत्पद्यते तथैवात्राऽपि

विकृतिरुत्पद्यते । तेन विषयाकारस्वरूपावगतिर्मनसो जायते । विषयदर्शनानन्तरं नेत्रे निमीलितेऽपि प्रभारूपयोर्यथापूर्वं स्फुरणम् मनोगोचरं भवति । शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तैव रूपाणीति तार्किका वदन्ति । हरितनीलरक्तभेदात्त्रिविधमेवेति केचन पाश्चात्याः । अपरे तु चित्रं विना षडेवेति वदन्ति । आकाशस्थस्य ईथर्नाम्नो वस्तुनः तरङ्गभेदा एव रूपाणीति पाश्चात्यैर्विद्वद्भिः निर्णीतं विद्यते । यदा एकस्यां विनाडिकायां ईथर्तरङ्गाः ४२,० लक्षसङ्ख्याका जायन्ते तदा रक्तप्रतीतिर्जायते । यदा तु ७२,० लक्षसङ्ख्याकास्तरङ्गा जायन्ते तदा नीलप्रतीतिर्भवति । इत्थमेव अन्येषां शुद्धरूपाणां च तरङ्गसङ्ख्याः सूक्ष्मयन्त्रपरीक्षया निर्णीता वर्तन्ते । चाक्षुषं ज्ञानं जनस्य शिरोवृद्धिं नेत्रवृद्धिं चानुसृत्य वर्धते । बालानां चाक्षुषज्ञानं मन्दं यूनां स्फुटमिति ज्ञायते । रूपालोकौ विना न चाक्षुषज्ञानं सम्भवति । चाक्षुषज्ञानकाले नेत्रस्पन्दः रेटिनेतिनेत्रान्तस्थनाडिकापटलस्य पुरस्ताद्वा पश्चाद्वा ऊर्ध्वं वा अधो वा विषयदेशानुसारेण वल्गनं विना चाक्षुषज्ञानं नोत्पद्यते । क्वचित्कण्ठशिरोदेशेष्वपि वल्गनं भवति । चाक्षुषज्ञानं विषयसम्भङ्गगुणादिप्रतीतिशबलितं भवति स्मृतिमिश्रं च । दर्शनकालिकमनोवृत्त्या च दृष्टो विषयः विकृतिमापद्यते । सुन्दरस्त्रीदर्शनेन कामिनः सन्यासिनः विरक्तस्य मांसाभिलाषिणो गृध्रस्य च भिन्नाः प्रत्ययास्सम्भवन्ति । यथा वैनाक्युलर्नामकयन्त्रसाहाय्येन दैर्घ्यस्थौल्यौन्नत्यरहितापि पटगता प्रतिकृतिः दैर्घ्यादिपरिमाणत्रयपरिमिता दृश्यते तथा नेत्रद्वयदर्शनेन वस्तूनां परिमाणत्रयप्रतीतिर्भवतीति ज्ञायते । एकेनापि नेत्रेण परिमाणत्रयज्ञाने जन्यमानेऽपि नेत्रद्वयेन तत्सुकरं भवतीति पाश्चात्या विद्वांसो वदन्ति । चाक्षुषज्ञाने गोचरीक्रियमाणविषयदेशपरिधिः अनुभवाधीनः । गोचरी-

कृतविषयदेशे विस्तृतेऽपि एकदेशमात्रस्य चाक्षुषत्वे इच्छा नियामिका भवति । एकदेशज्ञानेऽपि सम्पूर्णदेशावगमप्रतीतिः स्मृतिबलाज्जायते । पिशाचाद्यविद्यमानविषयप्रतीतौ भयादिविकृतमनोवृत्तिरेव कारणम् । मनोवृत्तिरेव चाक्षुषभ्रान्तिनिमित्तम् । चाक्षुषज्ञानयाथार्थ्यं स्मृत्या अनुभवेन स्पार्शादिज्ञानसंवादेव च निर्धार्यम् । सूर्यचन्द्रपरिमाणभ्रान्तिः वस्तूनां दूरत्वनैकट्यभ्रान्तिश्च सहजैव । यथा विद्वांसः काव्यं उपनिषदादिवाक्यानि च स्वाभिप्राययुक्त्यनुगुणं विवृण्वन्ति तथा चक्षुरपि दृष्टं विषयं विवृणोति न तु यथास्थितमवबोधयति । अतो चक्षुर्भ्यां वस्तूनां नैजः आकारः नैव ज्ञातुं शक्यते । यथा व्याख्यानं क्वचिद्भ्रान्तं क्वचिदंशे यथार्थं क्वचिदंशे मिथ्या तथैव चाक्षुषज्ञानमपि सत्यमिथ्याज्ञानमिश्रमेव भवति ; भ्रान्तिश्च देशकालमनोवृत्यादिभिरुत्पद्यते । चाक्षुषज्ञानं चित्रज्ञानमिव सत्यप्रदर्शकमपि भ्रान्तिजनकमिति पाश्चात्यविद्वांसो वदन्ति । चाक्षुषज्ञानकाले शिरोवल्गनादित्वाचप्रतीतयोऽनुभूयन्ते । इतरेन्द्रियजप्रत्यक्षेष्विव चाक्षुषज्ञानेऽपि कालप्रतीतिः देशप्रतीतिरपि सम्भवति । विषयप्रतीतिकाले ये येऽवयवाश्चलन्ति तेषां चलनानुभवश्च प्रतीयते ॥

(अनुवर्ति)

आर्. शामशास्त्री.

# विशिष्टाद्वैतम्

---

( अनुक्रमम )

## वृत्तिकारवाक्यकारद्रमिडाचार्याः.

कृत्स्नस्यास्य मीमांसाशास्त्रस्य वृत्तिकारो भगवान् बोधायनाचार्यः । "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः" इति श्रीमद्रामानुजभाष्यारम्भे दृश्यते । स एव हि बोधायनाचार्यः उपवर्षनाम्ना भगवता शबरस्वामिना भगवता शङ्कराचार्येणापि समुल्लिखितो दृश्यते । तत्र मानमिदं श्रीभाष्यतत्त्वटीकायां श्रीवेदान्ताचार्यप्रणीतायां स्फोटवादे—" अत्र शाबरं—गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीयाः इति भगवानुपवर्षः इति वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम । तदिह पातञ्जलादिप्रोक्तं प्रामाणिकमिति न भ्रमितव्यम् । तेषां बाह्यक्षेपार्थं वैभवोक्तिरपि स्यात् । युक्तिविरोधाच्चेति " ॥

अत्र स्यान्नामेति निर्देशात्सम्भावनामात्रमिति केचिद्वर्णयन्ति । तर्हि बोधायनस्यैवहीति निर्देशोऽपरिचिन्तितस्स्यात् । नाम स्यादेवहीति खलु योजनीयम् ॥ अपिच कविकाव्यचरित्ररूपेषु पुलवरपुराणमणिमेखलाप्रभृतिषु द्राविडभाषाप्रबन्धेषु बोधायनकृतायाः मीमांसावृत्तेः कृतकोटिपदेन निर्देशोऽस्तीति शृणुमः । तदपि युक्तमुत्पश्यामः— "उपवर्षो हलभूतिः कृतकोटिरयाचितः" इति निघण्टुः त्रिकाण्ड-

शेषे केशवनिघण्टौ च दृश्यते । तस्मात् बहोःकालाद्व्यवहारमवलोक्यैव श्रीमन्तः वेदान्ताचार्याः तत्त्वटीकायामेवमुक्तवन्त इति विजानीमः ॥

पाराशर्यविजये ११० पुटे बोधायनोपवर्षयोः भेदेन निर्देशोऽस्ति। सचैतादृशविचाराकरणनिबन्धन इत्यवयन्ति ॥

शारीरकनाम्नः ब्रह्ममीमांसाशास्त्रस्य द्रमिडाचार्येणातिसंक्षिप्तं भाष्यं प्रणीतं तदेव द्रमिडभाष्यमिति व्यवहारपदम् । छान्दोग्य-वाक्यस्यापि अपरं भाष्यमस्तु । ब्रह्मसूत्रभाष्यस्य तु विवरणं श्रीवत्साङ्कमिश्रेण प्रणीतम् । स एव विवरणकार इति व्यवहारगोचरः । अत्र मानं तु यामुनाचार्यविरचिते सिद्धित्रयोपक्रमे "यद्यपि भगवता बादरायणेनेदमर्थान्येव सूत्राणि प्रणीतानि । विवृतानि च तानि परिमितगम्भीरभाषिणा भगवता भाष्यकृता । विवृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि । तथापि आचार्यटङ्क—भर्तृप्रपञ्च—भर्तृमित्र—भर्तृहरि—ब्रह्मदत्त—शङ्कर — श्रीवत्साङ्क —भास्करादिविरचितसितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धयः न यथावत् अन्यथा च प्रतिपद्यन्त इति युक्तः प्रकरणप्रक्रमः" ॥ इति ॥

तथा आगमप्रामाण्ये तेनैव प्रणीते "नन्वत्रभवतां भाष्यकाराणां विरुद्धांशाप्रामाण्याभिधानं कथमिव । यदपि विरोधः कृत्वा-चिन्तया परिहृतः, तदपि गम्भीरन्यायसागरमवगाढुमपरिबृढानां कोमल-मनसां वेदानादरो माभूदित्येवम्परम् । यथैव हि भगवतो जैमिने कर्मफलोपन्यासः कर्मश्रद्धासंवर्धनायेति" ॥

अस्मिन् सन्दर्भे द्रमिडाचार्येण सूत्रभाष्यमपि प्रणीतमिति विज्ञा-यते । बोधायनेन उपवर्षाचार्येण वा वृत्तिः प्रणीतेति न विज्ञायते । तथा वाक्यकारभाष्यकारयोरपि निर्देशो नास्ति । तेन विजानीमः— आचार्यटङ्कादयः न विशिष्टाद्वैतसम्प्रदायप्रवक्तार इति हृदयमिति ॥

वेदार्थसंग्रहे च भगवद्रामानुजाचार्यैः "भगवद्बोधायन—टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदान्त-व्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः" इति निर्णीतम् ॥

तात्पर्यदीपिकायां सुदर्शनाचार्यप्रणीतायां वेदार्थसङ्ग्रहव्याख्यायां "टङ्कः ब्रह्मनन्दी" इति व्याख्यातमस्ति । भारुचिस्तु मनुस्मृति-व्याख्यातेति उत्तमब्रह्मविद्याख्यवैखानसग्रन्थतोऽवगम्यते ॥

अनेन टङ्काचार्यस्य ब्रह्मनन्दिनाम्नः विशिष्टाद्वैतसिद्धान्तानुया-यिता सूचिता भवति। सिद्धित्रयप्रकरणपरामर्शेन तु "आचार्यटङ्केति" निर्देशेन इतरसिद्धान्तानुयायिताऽवगमिता भवति । विचारे क्रियमाणे सिद्धित्रयोल्लिखितः टङ्कः अन्य इति वक्तुं सुलभम् । अत एव वा टङ्को ब्रह्मनन्दीति श्रुतप्रकाशिकाचार्यवचनं प्रवृत्तमित्यप्यभ्यूह्यते । अथवा सम्प्रदायप्रभेद इति विमर्शनीयं विपश्चिद्भिः ॥

तत्त्वटीकायां साधनसप्तकनिरूपणप्रकरणे "अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः" इति निर्देशोऽस्ति ॥ "वेदन-मुपासनं स्यात्तद्विषये श्रवणात्" इति वाक्यव्याख्याने श्रीभाष्ये "सर्वा-सूपनिषत्सु" इति निर्देशोऽस्ति । अस्य च निर्देशस्य "न केवलं छान्दोग्य इत्यर्थः" इतिश्रुतप्रकाशिकाव्याख्यानमस्ति। तेन वाक्य-नामको ग्रन्थः छान्दोग्यव्याख्यानं, तस्यैव भाष्यं द्रमिडाचार्यप्रणी-तमिति स्फुटम् ॥

अपिच; इदमत्रावधारणीयम्—श्रीसुरेश्वराचार्यशिष्यसर्वज्ञात्म-मुनिविरचिते संक्षेपशारीरके प्रबन्धे—

आत्रेयवाक्यमपि संव्यवहारमात्रं
कार्यं समस्तमपि नः कथयांबभूव ।

सत्कार्यवादविषये न हि दोषराशिः
मायामये भवितुमुत्सहते विरोधात् ॥ २१७

कार्यकारणयोस्संव्यवहारमात्रत्वं ब्रह्मनन्दिनाप्याचार्येण छान्दोग्यभाष्ये परैरुक्तदोषाप्राप्त्यर्थमुक्तमित्याहेति टीका ॥ अत्रेदं वाक्यकारवाक्यमवधेयम्—"नासतोऽनिष्पाद्यत्वात् । प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात् । न संव्यवहारमात्रत्वात्" ॥ इति ॥

काणाददर्शनसमाश्रयदोषराशिः
दूरान्निरस्त इह संव्यवहारमात्रे ।
वेदान्तभूमिकुशलो मुनिरत्रिवंश्यः
तेनाह कार्यमिह संव्यवहारमात्रम् ॥ २१८

वेदान्तभूमिकुशलोऽत्रिवंश्यो मुनिः ब्रह्मनन्द्याख्यः कार्यं संव्यवहारमात्रं सदसद्विलक्षणं मायामयमित्याहेति योजना ॥

षष्ठ प्रपाठकनिबद्धमुदीरितं यत्
तत्सत्यमेव खलु सत्यसमाश्रयत्वात् ।
अत्रैवयत्पुनरुवाच समुद्रफेन-
दृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥ २१९

पूर्वं विकारमुपवर्ण्य शनैश्शनैस्त-
दृष्टिं विसृज्य निकटं परिगृह्य तस्मात् ।
सर्वं विकारमथ संव्यवहारमात्रं
अद्वैतमेव परिरक्षति वाक्यकारः ॥ २२०

(अनुवर्तते)

लक्ष्मीपुरं श्रीनिवासाचार्यः.

॥ श्रीः ॥

# कुट्टाकारशिरोमणिः

(श्रीदेवराजविरचितः)

स्वोपज्ञया महालक्ष्मीमुक्तावल्या व्याख्यया संवलितः

---

नत्वा श्रीरमणं गुरूनपि मया प्रोक्तो मुदे धीमता-
माचार्यार्यभटोक्तकुट्टयुगलीव्याख्याविशेषोऽमुकः ।
कुट्टाकारशिरोमणिः स्फुटपदैरङ्कैश्च साङ्कनिकै-
र्वाक्यैरप्यनुयोगवृत्तसहितैर्व्याख्यायते विस्तरात् ॥

अथायं देवराजः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्तये प्रचयगमनाय चाद्यया गीत्या स्वाभिमतदेवताप्रणिपातं कृत्वा ग्रन्थारम्भं प्रतिजानीते ॥

नत्वा रमाधरण्यौ वरदार्यसुतेन देवराजेन ।
आर्यभटाचार्यकृतः कुट्टाकारः प्रकाश्यते स्पष्टम् ॥ १ ॥

रमाधरण्यौ लक्ष्मीभूमिदेव्यौ नत्वा प्रणिपत्य वरदार्यसुतेन देवराजेन अत्रिकुलतिलकस्य सिद्धान्तवल्लभ इति प्रसिद्धापरनाम्नः श्रीवरदार्यस्य तनयेन देवराजेन ; देवराज इति ग्रन्थकर्तुरभिधानम् । अनेनार्यभटाचार्यकृतः आचार्यार्यभटविरचितः कुट्टाकारः साग्रनिरग्ररूपेण द्विविधः खण्डनात्मको गणितविशेषः । कुट्ट छेदनभर्त्सनयोः । कुट्ट्यते छिद्यते खण्ड्यतेऽनेनेति करणे 'टाप्' प्रत्ययः । अत्राकारशब्दः स्वरूपवचनः । अतः कुट्टस्वरूपः कुट्टाकार इति । स्पष्टं व्यक्तं प्रकाश्यते व्यज्यते । अस्य ग्रन्थस्य कुट्टाकारशिरोमणिरिति नाम विज्ञायते एतद्ग्रन्थोपसंहारगीत्यां 'कुट्टाकारशिरोमणिमिममभ्यस्यति' इति वचनदर्शनात् । अत्र च तन्नामकरणमिति ज्ञातत्वादेतद्ग्रन्थार्थावबोधे-

नाचार्यार्यभटप्रणीतकुट्टाकारसूत्रयुगस्याप्यर्थः । सम्यग्व्यक्तीभविष्यतीति तस्यायं व्याख्याविशेषो भवतीत्युपपन्नम् ॥

अथ कुट्टाकारस्य द्वैविध्यं तदुक्तक्रमं चार्ययाह—

**कुट्टाकारौ भवतः साग्रनिरग्राविहादितस्साग्रम् ।**
**संक्षिप्य दर्शयित्वा ततो निरग्रः प्रदर्श्यते व्यक्तम् ॥ २ ॥**

कुट्टाकारौ साग्रनिरग्रौ भवतः । इह साग्रकुट्टाकारनिरग्रकुट्टाकारयोर्मध्ये आदितः प्रथमतः साग्रं साग्रकुट्टकारं संक्षिप्य समस्य दर्शयित्वा उक्त्वेत्यर्थः । ततः साग्रकथनानन्तरं निरग्रः निरग्रकुट्टाकारः व्यक्तं स्फुटं प्रदर्श्यते उच्यत इति यावत् ॥

अथात्र कं सिद्धान्तमवलम्ब्य भागहारभाज्योक्तिरिति न ज्ञायत इति तज्ज्ञानार्थमार्ययाह ॥

**अत्र हरभाज्यराशी भास्करसिद्धान्तमार्गमवलम्ब्य ।**
**उच्येते दैवज्ञैरार्यभटीये च तौ समारोप्यौ ॥ ३ ॥**

अत्र इह ग्रन्थे हरभाज्यराशी हरराशिः चतुर्युगसम्बन्धिरविमासचान्द्रदिनसावनदिवसादिः । भाज्यराशिः चतुर्युगसम्बन्ध्यधिमासावमदिनग्रहभगणादिः । तौ भास्करसिद्धान्तमार्गं श्री सूर्यसिद्धान्तस्य पन्थानमवलम्ब्य उच्येते । तौ पूर्वोक्तौ हरभाज्यराशी दैवज्ञैः ज्यौतिषिकैः आर्यभटीये च आर्यभटसिद्धान्तेऽपि समारोप्यावेव । श्रीसूर्यसिद्धान्ताश्रयणेन यत्रोच्यते तत्र चार्यभटसिद्धान्ताश्रयणे चोन्नेयमित्यर्थः ॥

अथार्यया साग्रविषयं प्रश्नं साधयति—

**उद्दिष्टहारकद्वयसम्भक्तविभाज्यराशिशेषाभ्याम् ।**
**यस्सपदि भाज्यराशिं कथयति भूमौ स साग्रविद्भवति ॥४॥**

उद्दिष्टहारकद्वयसम्भक्तविभाज्यराशिशेषाभ्यामिति; विभक्तव्यो राशिर्विभाज्यराशिः; हारकयोर्द्वयं हारकद्वयम्; उद्दिष्टं च तत् हारकद्वयं च उद्दिष्टहारकद्वयं; तेन सम्भक्तः उद्दिष्टहारकद्वयसम्भक्तः; उद्दिष्टहारकद्वयसम्भक्तश्चायं विभाज्यराशिश्च: उद्दिष्टहारकद्वयसम्भक्तविभाज्यराशिः; तस्य शेषौ तथोक्तौ। ताभ्यामुद्दिष्टाभ्यां भाज्यराशिं यस्सपदि कथयति स भूमौ साग्रविद्भवति। अत्रेदं प्रश्नस्वरूपम्। यस्मिन्कस्मिंश्चिद्भाज्यराशावुद्दिष्टाभ्यां भिन्नसङ्ख्याभ्यां याभ्यां काभ्यां भागहाराभ्यां पृथक्पृथग्विभक्ते ये शिष्येते ताभ्यामतुल्यसङ्ख्याभ्यां कथिताभ्यां भाज्यराशिस्सद्योऽन्वेषणीय इति। एतदुपलक्षणम्। एकस्मिन्नेव भाज्यराशौ पृथक्पृथग्बहुभिरुद्दिष्टैर्भागहारैर्विभक्ते शेषाभ्यां विलक्षणाभ्यामुक्ताभ्यां भाज्यराशिरन्वेष्टव्य इत्येवमादौ प्रश्ने। अत्र भागहाराणां भक्तशेषसाम्यवैषम्यवशाद्द्वैविध्यम्। एतच्चोत्तरत्र व्यक्तीभविष्यति॥

अथोक्तप्रश्नभङ्गार्थमार्ययाह—

**अधिकाग्राद्यार्यायुगमाचार्यार्यभटविरचितं साग्रे।**
**आरोप्य तत्र जातैः कर्मकदम्बैः प्रसाधयेद्भाज्यम्॥ ५॥**

आचार्यार्यभटविरचितमधिकाग्राद्यार्यायुगं साग्रे अरोप्य तत्र जातैः कर्मकदम्बैर्भाज्यं प्रसाधयेत्। अत्रैतदार्यभटाचार्यप्रणीतं कुट्टाकारयुग्मविषयमधिकाग्रादि सूत्रद्वयम्॥

"अधिकाग्रभागहारं छिन्द्यादूनाग्रभागहारेण।
शेषपरस्परभक्तं मतिगुणमग्रान्तरे क्षिप्तम्॥
अध उपरि गुणितमन्त्ययुगूनाग्रच्छेदभाजिते शेषम्।
अधिकाग्रच्छेदगुणं द्विच्छेदाग्रमधिकाग्रयुतम्॥" इति॥

(आर्यभटीये गणितपादे श्लो. ३२-३३.)

एतत्सूत्रद्वयं प्रश्नभङ्गार्थं साग्रमधिकृत्य व्याख्यायते। अधिकाग्रभागहार-

मिति। अत्राग्रशब्दः शेषवचनः साग्रकोटिरितिवत्। अधिकमग्रं यस्य सोऽधिकाग्रः। भागहारो भाजकः; अधिकाग्रश्चासौ भागहारश्चेत्यधिकाग्रभागहारः। येन भाज्यराशौ भक्ते शेषमन्यस्माच्छेषादधिकसङ्ख्यं भवति सोऽधिकाग्रभागहार इत्यर्थः। ऊनाग्रभागहारेण ऊनमितरस्माच्छेषाद्हीनमग्रं शेषं यस्य स ऊनाग्रः। ऊनाग्रश्चासौ भागहारश्च स तथोक्तः। तेन छिन्द्यात् विभजेत्। एतच्च सति सम्भवे कर्तव्यम्। अधिकाग्रभागहारमूनाग्रभागहारेण छिन्द्यादिति पृथग्वाक्यकरणादत्रलब्धेन प्रयोजनं नास्तीति ज्ञाप्यते। अथ शेषपरस्परभक्तं; भक्तं भजनं भावे निष्ठा। अत्र कार्यमिति पदमध्याहार्यम्। शेषयोः परस्परभजनं कार्यम्। एतदुक्तं भवति। ऊनाग्रभागहारेण अधिकाग्रभागहारे हृते यच्छिष्येत तेनोनाग्रभागहारं विभजेत। तत्र लब्धं फलत्वेन कुत्रचित्स्थापयेत्। ततस्तच्छेषेणाधिकाग्रभागहारशेषं विभजेत्। लब्धं पूर्वस्थापितस्य फलस्याधः स्थापयेत्। ततस्तच्छेषेणोनाग्रहारशेषं विभजेत्। लब्धं पूर्वनिहितयोः फलयोरधो निदध्यात्। एवं तावत्कुर्यात् यावत्फलपङ्क्तिः समा भवति शेषावप्यल्पाविति। अथ मतिगुणं मत्या गुणितं कार्यम्। एतदुक्तं भवति। परस्परभक्तशेषयोर्यद्यल्पमुपरिस्थितं तद्यथासङ्ख्यमग्रान्तरेण क्षिप्तंचाधःस्थितेनान्येन भक्तं शुध्यति सा मतिः। तयाल्पमुपरि स्थितं परस्परभक्तशेषं गुणितं कार्यमिति। अत्रैतदनुसन्धेयम्। पूर्वमुपर्यधोभावेन निहितानां समपङ्क्तीनां फलानामधो मतिसंज्ञं गुणमपि स्थापयेदिति। एतच्च मतिगुणमित्यस्यार्थान्तराङ्गीकरणेन सिध्यति। तथा मतिगुणं। गुणे गुणकारः। "गुणकारस्तु गुणको गुणो वर्धक इत्यपि" इति सिद्धान्तदर्पणकारो गोविन्दभट्टयज्वा। मतिरेवगुणो मतिगुणः। मत्याख्यो गुण इत्यर्थः। तं स्थापयेदिति॥ (क्रमशः)

**क. शेषाचार्यः.**

## अभिनवसुभाषितावलिः

## II

॥ ६* ॥

अमूल्यमणिभूषणावलिविराजितं वामतः
तथाविधवपुश्श्रिया गिरिजयान्तिकोद्भासितम् ।
त्रिलोककृतपःफलं सपदि चामराजेश्वरं
विलोक्य नयनद्वयं न खलु तृप्तिमालम्बते ॥

कदाचिदनुबन्धिगृहप्वारब्धं विवाहसमारम्भमनुभवितुं स्वनगरं चामराजनगरं गताः श्रीमन्तो रामशास्त्रिणः सायं नगरप्रवेशानुपदमेव रथ्यासु साट्टहासं प्रचलन्तं श्रीचामराजेश्वरोत्सवमालोक्य देवदेवमाशु निबद्धैः वचोभिरित्थमस्तुवन् लीलयेति ज्ञायते ॥

॥ ७ ॥

कष्टैर्हन्त बलात्पदैः कतिपयैः पद्यात्मना साहसा-
दस्माकं मुखतोऽप्युदञ्चति न किं या कापि वाक्किं तया ।
सूक्तिः कस्यचिदेव सा विजयते या द्वेषदुष्टात्मनां
शत्रूणामपि कर्णयोः कृतसुधावर्षा मनः कर्षति ॥

एकदा असदृशकवितासमावर्जितसहृदयस्वान्तेषु शास्त्रिषु गीर्वाणवार्तापत्रिकायामेकस्यां समस्यापूरणाय प्रकटीकृतस्य कृतसुधावर्षा मनः

* तदेतत् श्लोकत्रितयं श्री चामराजनगराभिजनरामशास्त्रिवरप्रणीतं ; उदाहृतं चाद्य तत्रभवद्भिः श्रीमन्महाराजाङ्गलकलाशालासंस्कृतोपाध्यायकैः गुरुजनोपात्तानवद्यसाहित्यसारैः श्रीमद्भिरस्मद्गुरुभिः सि. आर्. नरसिंहशास्त्रिभिः ॥

कर्षतीति श्लोकशकलस्येदृशेन निर्बन्धेण काव्यरसामृतवारिधिविहारोन्मुखमात्मजन्मानं चमच्चक्रुरिति श्रूयते ॥

॥ ८ ॥

धाता वित्तसमृद्धिरित्यधनता चेति द्वयोः कन्ययोः
स्वस्याद्यामविचारमेव यददात्पुंसेऽधमायाज्ञवत् ।
तज्जातानुशयो विचार्य सुकुलं शीलं च विद्योत्करं
तैरन्यैश्च गुणैर्युताय पुरुषायादाद्द्वितीयां सुताम् ॥

लोके गुणवत्त्वं धनवत्त्वं च नैकत्रालङ्कुरुत इति पर्यायेण सरसोक्तिरियम् ॥

॥ ९* ॥

कृष्णराज महाराज गायन्ति तव पौरुषम् ।
विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः ॥

कदाचित्प्रासादनिश्रेणीमारोहता श्रीमता रसिकशिखामणिना तृतीयेन कृष्णराजमहाराजेन 'अन्तिमसोपानाक्रमणात्प्रागेव कंचन श्लोकमारचये' त्यादिष्टो विदूषकवरस्सुब्बरायशर्मा तथेति पूर्वार्धमनुपदमेवोच्चैर्जगाद; उत्तरार्धसमीकरणे तु सहसा शून्यमतिर्बभूव । अन्तिमसोपानमाक्रममाणो राजा 'हन्त! पराजितोऽसी' ति यावन्नावोचत्तावदेवायं परिहासपराजयाकुलोऽपि धैर्यमवलम्ब्य अमरगतेनार्धेन योजयित्वा श्लोकमपूरयत् । राजा च तं भृशमसभाजयदित्यहो विलास श्रीकृष्णराजस्य! अहो वैभवः परिहासस्य!

* त्रय इमे श्लोकाः आस्थानमहाविद्वद्भिः विश्रान्तशिक्षणकलाशालापण्डितैः अनवरतानुभूतानुभावितकाव्यानन्दैः श्रीमद्भिः बेट्टहलसूरु-वेङ्कटरामशास्त्रिभिः स्मृताः; मुखमुपकृतश्चानेनायं जनः ॥

॥ १० ॥

श्यामलाङ्गस्य रामस्य रेजे सीताऽङ्कवासिनी ।
नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ॥

एकदा श्रीरामदेवायतनं प्राप्य मङ्गलनीराजनावसरे मन्त्रपुष्पमुद्घोषयत्सु वेदवित्सु श्रीरामचन्द्रमूर्तेर्दर्शनेनानन्दितः कश्चिद्राजा पुरुषोत्तमवर्णनाय समीपस्थं ब्राह्मणमाकारयामास । तदनु नीलतोयदेति मन्त्रपुष्पवाक्यघोषात्यवहितपूर्वं सहसा समाप्तं पूर्वार्धं दृष्ट्वा स्वयमेव विस्मितो विरराम स द्विजवरः । चमत्कारिणानेन श्लोकपूरणेन तुष्टास्सर्वे ब्राह्मणस्य प्रतिभां प्रशशंसुः । राजा च तं सममीमनदिति कश्चिदितिहासः ॥

॥ ११ ॥

आसायं कथमप्यनायि दिवसस्संकल्पजाले मया
दीपत्यद्य वियोगदीपमुकुले चेतः पतङ्गायते ।
प्रासादेऽपि शिरोगृहेऽपि सुमनस्तल्पेऽपि केलीगृहे
निद्रा नैति निशा नयाति तरुणी नायाति का वेदना ॥

रात्रौ मेलनीयामिति मिथस्समयमुल्लङ्घ्य नवयौवना काचन सुन्दरी राजानं कठिनतमां विरहव्यथां प्रापयदिति मर्म प्रासादशिरोगृहाश्रयकदाश्रयणरूपैः राज्ञश्चापलैरेव विदित्वा विदूषक इत्थमुद्घाटयति । तेनातीव ह्रीतो भूपतिः कुशलमतिमेनमतः परं स्वनर्मसु मुख्यसचिवमकरोदित्यपर इतिहासः ॥

॥ १२* ॥

सृष्टेः पूर्वमभूत्तमोगुणमयी मयाऽथ या तद्रसा-
दैवज्ञस्य नृसिंहशर्मण इमां मायां विधिर्निर्ममे ।

* एते त्रयः अस्मदार्यमिश्रैरास्थानविद्वद्भिः श्रीमद्भिः सारिग्लूर्वनृसिंहपुराभिजनैः (होळेनरसीपुर) हरिभट्टमहाशयैः स्मृताः ॥

तत्पिण्याकचयानुतान्धतमसस्वर्भानुकल्यादिका-
नेतान्नीलतमानिति त्रिजगति प्राहुस्तदज्ञा जनाः ॥

कदाचिद्द्वादश्यां प्रातः मित्रैस्सार्धं ग्रामप्रदक्षिणाय गच्छन्तः श्रीमन्तः परिचितपूर्वाः पारुपत्ते गुरुराजाचार्याः मार्गे अतिकृष्णां काञ्चन स्त्रियं दृष्ट्वा श्लोकमिमं व्याजह्रुः । अन्धतमसादीनां नीलतमत्वमपह्नुतमज्ञवच नत्वोपन्यसेनेति चित्रम् । हन्त! विचित्रा च काव्यसरणिरेषां महात्मनाम् ॥

॥ १३ ॥

भगणाधिदैवसुमुखी यगणसमाक्रान्तकुचनितम्बैषा ।
तगणफलोपममध्या सुगुणा रगणाधिदैवहरणाय ॥

प्रातस्समीपगृहादग्निमाहरन्तीं सुरूपां भामिनीं दृष्ट्वा स्वगृहवेदिकोपविष्टास्त एव आचार्या इत्थमवर्णयन्निति श्रूयते । अत्र मयरसेत्यादिगणानामधिदेवताफलादीनि यथोचितं योजनीयानि । भगणाधिदैवश्चन्द्रः, चन्द्रसुमुखीति ; यगणफलं वृद्धिः, वृद्धिसमाक्रान्तावस्याः कुचनितम्बाविति ; तगणफलं शून्यं, शून्यमध्येति ; रगणाधिदैवो वह्निः, तदाहरणाय सुगुणासाविति चार्थः ॥

॥ १४ ॥

विपुलया कृपया पृथिवीपते-
सपदि मां कृपणं परिपालय ।
यदि सुधी स्त्वपशब्दमिह स्थितं
सपदि पश्यति मामपि पश्यति ॥

अन्तर्लापोऽयम् । अत्रापशब्दस्य अपगतपकारः शब्द इति विग्रहो बोध्यः । एकदा नंदीपूर्वन्नींसहपुरमलङ्कृतवत्यां विद्वन्मण्डल्यामनेन मुहूर्तमिव विततः कोलाहल इति श्रुतम् ॥

(अनुवर्तते) एच्. एल्. हरियप्पः

## महापाठशालावृत्तान्तः.

---

निदाघविरामानन्तरं वैशाखकृष्णषष्ठीप्रभृति महापाठशालायां यथापूर्वं पाठप्रवचनान्यारभन्त । अथ विशेषतो रमणीयस्सरस्वत्या विलासः प्रासादे. यद्वार्षिकपरीक्षामन्त्रिङ्गितत्वात् सर्वे छात्रा अनल्पव्यासङ्गशीलास्तां विलासयन्ति वाग्देवीम् ॥

ज्येष्ठशुक्लैकादश्यामिन्दुवासरे महाप्रभोः श्रीकृष्णराजसार्वभौमस्य पञ्चचत्वारिंशः जन्मदिवसोत्सवस्ससंभ्रममत्र निर्वृत्तः । प्रातः श्रीविद्यागणपतिस्वामिनामेकादशवारं रुद्राभिषेकः मध्याह्ने मङ्गळनीराजनं राजाशीर्वादः प्रसादविनियोगश्च समभूवन् । परेद्युरपराह्णे सभायां श्रीमन्तो विद्वांसः भाग्यपल्ली-श्रीनिवासाचार्याः श्रीमन्महाराजस्यानन्तान् गुणान् अन्यांश्च राजभक्तिपरान् विषयानुदभावयन् । तदनु श्रीविद्यागणपतिस्वामिनां सन्निधौ चिरं सुखं जीयान्महाराजः, "चिरमभिवर्धतां यदुसन्तानश्रीः" इत्यादीनि मङ्गलानि सवेदत्रयघोषमाशशंसुः पण्डितवरास्सशिष्याः । इत्थमाचान्तश्रीकृष्णगुणामृतरसाः आस्वादितफलशर्करार्द्रीकृतरसनाश्च सर्वे गृहमभ्ययुः ॥

चिरप्रभृत्यस्यां महापाठशालायां यथाशक्ति यथामति यथादेशकालदशं च शिष्यपरम्परानुग्रहादिना महापाठशालाभिवृद्धौ निरतास्सन्तः इतः परं विश्रान्तिसुखानुभवायानुमता इमे विद्वन्मणयः—

महामहोपाध्यायाः पण्डितरत्नं लक्ष्मीपुरं श्रीनिवासाचार्याः,

धर्माधिकारिणः महाविद्वांसः पेरियकोळं रामचन्द्राचार्याः,

महाविद्वांसः द्विवेदि सुब्रह्मण्यावधानिनः,

अय्यावनपाठिनः,

महाविद्वांसः—काशी सुब्रह्मण्यशास्त्रिणः,
,, आनेकल् श्रीनिवासाचार्याः,
विद्वांसः कृष्णावधानिनः,
,, सदाशिवशास्त्रिणः.

महाशयानामेतेषां निवर्तनेन महापाठशालापाठकपङ्क्तौ महती हि न्यूनता; परमेतत्स्थानेषु सुपात्रनियोगेन मन्दोत्कण्ठा भूयात् शिष्यकोटिरित्याशस्यते ॥

महापाठशालीया श्रीसरस्वतीप्रासादविद्वत्सभा विद्यार्थिवर्गस्य यथापूर्वमनुरूपां संस्कृतिमातन्वती विराजते । अतीते मासत्रये उपन्यासाः पञ्च प्रवृत्ताः—

१. वैशाखकृष्णत्रयोदश्यां श्रीमन्तो विद्वांसः नटेशघनपाठिनः "**वर्णक्रमं,**"
२. ज्येष्ठसित तृतीयायां सभाया उपाध्याक्षाः श्रीमन्तः भाग्यपल्ली-श्रीनिवासाचार्याः "**आस्माकीनसभावृत्तान्तं**",
३. ज्येष्ठासित तृतीयायां विद्यार्थी सि. के. रङ्गनाथार्यः "**काव्यविमर्शं**",
४. आषाढशुक्ल तृतीयायां श्रीमन्तो विद्वांसः चक्रवर्ति-तिरुमलाचार्याः "**पाणिनिसूत्रप्रयोजनं,**"
५. आषाढकृष्ण तृतीयायां श्रीमन्तो विद्वांसः सु. नारायणस्वामिशास्त्रिणः "**गायत्रीं**"

चाधिकृत्य उपन्यास्थन् । आषाढशुक्ल त्रयोदश्यां ब्र. श्री. महाविदुषां के. गोपालकृष्णशास्त्रिणां नेतृत्वे सि. के. रङ्गनाथार्य, एव्. वि. नारायण,. एस्. कृष्णमूर्ति, चि. श्रीनिवासाचार्य नामकैः विद्यार्थिभिः

"काव्यलक्षणपरिष्कार" रूपो वाक्यार्थो निरवर्ति। किञ्च प्रतिप्रदोषमन्त्याक्षरीपठने परां श्रद्धामधुः केचन विद्यार्थिसुहृद इति यथावृत्तमावेदयामः ॥

सभाकार्यनिर्वाहे तत्रभवतां श्रीमतामध्यक्षवराणां एच्. योगनरसिंहार्याणां, महामहोपाध्यायानां विद्यानिधीनां विरूपाक्षशास्त्रिणां, महाविदुषां के. गोपालकृष्णशास्त्रिणां. विदुषां भाष्यपल्ली-श्रीनिवासाचार्याणां, विदुषां नेरूरु कृष्णाचार्याणां च महान् नैसर्गिकश्च आदरोऽस्मानुत्तेजयति ; भृशमुपकृताः स्मः। एवमेवानुक्षणमुपाध्यायवृन्दानिष्यन्दमानेन करुणामृतरसेन संभृतदोहदा चिरं जीयादियं सभेत्यनुगृह्णातु श्रीमान् विद्यागणपतिरिति शम् ॥

"कर्णाटक्षितिमण्डले विजयतां सद्धर्मकल्पद्रुमः
विद्या तत्प्रतिपादिका विजयतां सर्वार्थचिन्तामणिः।
भूयस्तत्प्रविबोधिनी विजयतां सङ्ख्यावतां मण्डली
वा एताः परिपालयन् विजयतां श्रीकृष्णराजप्रभुः" ॥

(श्रीबालसरस्वती.)

एच्. एल्. हरियप्पः.

## सम्पादकीयम्.

---

सिद्धान्तवल्लभेतिविरुदभाजः अत्रिगोत्रोद्भवस्य वरदाचार्यस्य सूनुना देवराजेन रचितोऽयं निबन्धमणिः आ-

कुट्टाकारशिरोमणिः

र्यभटीयान्तर्गतसाग्रनिरग्रकुट्टकविषयकार्याद्वयस्य व्याख्यारूपः कुट्टकानुबोधकग्रन्थराशौ अत्युज्ज्वलतया राराजते । सोऽयंमणिः ज्यौतिषग्रन्थमहोदधेरुदरगह्वरादुद्धृतः अस्मन्महा पाठशालायाः ज्योतिश्शास्त्रप्रधानाध्यापकैः महाविद्वद्भिः करूरभिजनैः श्रीमद्भिश्शेषाचार्यैरिति ग्रहगणितचमत्काररसिकानामखिलविदुषां सन्तोषं जनयति । कालवशतो ह्रसन्तं ज्योतिस्सिद्धान्तं विलयनादुद्दिधीर्षवः एते विद्वांसः अतन्द्रितेन चित्तेन सिद्धान्तं पाठयन्ति पठन्ति च । त्रिप्रश्नाधिकारे गोळाध्यायादौ च शिष्याणां सुखबोधसञ्जननार्थं कक्ष्यासमेतं खगोळभूगोळदृग्गोळरूपं यन्त्रत्रयमप्येते कारयन्ति ॥

देवराजः कदा भारतभूमिमलञ्चकारेत्यादिविषये न कोऽपि निर्णयः सञ्जातः । सः भास्कराचार्यादर्वाचीन इति मात्रं ज्ञायते । ग्रन्थस्यान्तं मुद्रणानन्तरं विद्वन्मणीनां विमर्शनात् अधिकांशाः ज्ञातुं पार्यन्ते ॥

---

सञ्चिकायाश्चास्या यथाकलमनागमनं मुद्रणगतविपुलविघ्नतन्त्रं मर्षयन्तु श्रीमन्तः वाचकमहोदया इति बहुवारं सम्प्रार्थ्यते.। १९३० हायनोदयमारभ्य यथाकालं वाचककरकमलमुल्लासयितुं पर्याप्तमानुकूल्यं पत्रिका प्राप्स्यतीति परं विश्वसिमः ॥

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

## सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः( रेजिस्ट्रार् )

२. श्रीमन्तः अर्थशास्त्रविशारदाः, डाक्टर् आर्. शामशास्त्रिणः बि.ए., पिएच्. डि., एं. आर्. ए. एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च.

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारि महाविद्वान् ब्र. श्री. काशी· शेषवेंकटाचलशास्त्रिणः

५. महामहोपाध्याय पण्डितरत्नं ब्र. श्री लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्त महापाठशाला विशिष्टाद्वैत वेदान्त प्रधानोपाध्यायाः.

६. महामहोपाध्याय विद्यानिधि ब्र.श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्त प्रधानोपाध्यायाः

७. महाविद्वान् ब्र. के. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच.एल्. हरियप्पार्याः, एं.ए., महापाठशालोपाध्यायाः

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिष्कृतं कस्याप्यनुद्वेगकरं अचर्वितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलाससुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान धन्यवादान पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न ह्यीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)

२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.

३. विभिन्नदेशे सपादरूप्यकत्रयम् (3 s.) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः "

(ईशोपनिषत्)

सम्पुटम् ५] अक्टोबर-१९२९ [सञ्चिका-४

करवदरसदृशमखिलं
  भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः
  सा जयति सरस्वती देवी ॥

खिन्नोऽसिमुञ्च शैलं
  बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नवितथबाहुषु
  गोपेषु हसन् हरिर्जयति ॥

स जयति हिमकरलेखा
  चकास्ति यस्योमयोत्कया निहिता ।
नयनप्रदीपकज्जल-
  जिघृक्षया शिरसि रजतशुक्तिरिव ॥

(सुबन्धुः)

# मनस्तत्त्वम्.

---

(अनुवृत्तम्)

## घ्राणरासनस्पार्शप्रत्यक्षाणि.

घ्राणेन्द्रियं नासाग्रवर्ति । नासाग्रमाच्छादितं चेत् न गन्धज्ञानं जायते । घ्राणपाटवं प्रतिमनुष्यं-प्रतिप्राणि च भिद्यते । श्वानः शुनकेनान्येन मृगेणवा यत्र यत्र भूम्यां पादविन्यासः कृतः तं तं प्रदेशमाघ्राय शुनकमृगादिभिः प्राप्तं देशमवगम्य तत्रैव गच्छन्ति । तेच न नीग्रोजातिजनाः शत्रूणां पादविक्षेपेण चिह्नितं प्रदेशमाघ्राय शत्रूणामावासस्थानं उपगच्छन्ति । सूक्ष्मोऽपि गन्धो यथा केषांचिदवगतो भवति तथा नान्येषामिति गन्धवद्वस्तुस्वरूपज्ञानं नैव भवति एवमेव शब्दरसप्रत्यक्षेण शब्दरसजनकवस्तुस्वरूपं नैवविदितं भवति । नापि गन्धोत्पत्तिदिङ्निर्णयो जायते । एवं शब्दरसप्रत्यक्षेण दिङ्निर्णयो न जायते, केषांचिज्जायमानो दिङ्निर्णयः पूर्वानुभूतचाक्षुषस्पार्शप्रत्यक्षबलेनैवेति ज्ञायते । चाक्षुषस्पार्शप्रत्यक्षाणि देशनिर्णयज्ञानजनकानि गन्धरसशब्दज्ञानानि तु न तथेति पाश्चात्यविदुषां सिद्धान्तः । कथं तर्हि पुरातनैरर्जुनादिभिः शब्दवेधः कृतः ? एतत्तु जिज्ञास्यम् । रसप्रत्यक्षे रसनोपरिनिहितवस्तूनां मार्दवगुरुत्वपरिमाणादिकं गुणा अपि ज्ञायन्ते । रसज्ञानेन रसवद्द्रव्यज्ञानं पूर्वानुभूत चाक्षुषस्पार्शप्रत्यक्षबलेनैव जायते । शब्दाज्ज्ञानम्—वायुतरङ्गाः शब्दजनकवस्त्वभिघातोत्पन्नाः कर्णान्तर्गतं मृदङ्गावरणचर्मसदृशं चर्म

आहत्य शब्दज्ञानं उत्पादयन्ति। शब्दो नाकाशगुणः इति पाश्चात्यविद्वद्भिः परीक्ष्य निर्णीतम्। भस्त्रिकासदृशश्वासकोशस्पन्दनजन्याः शब्दाः जृम्भाजन्याः शब्दाः हृत्स्पन्दजन्याश्च शब्दाः आन्तराः कदाचिच्छ्रूयन्ते। शब्दजनका वायुतरङ्गाः समानाकारपरिमाणाश्चेत् आह्लादकराः भवन्ति. वायुतरङ्गा भिन्नभिन्नाकारपरिमाणाश्चेत् विसंवाद्युच्चनीचादिस्वरजनका न श्राव्या भवन्ति। श्राव्यास्स्वराः गानपदवाच्या भवन्ति। उच्चस्वरे तरङ्गा बहवः नीचेऽल्पाः। परमोच्चपरमनीचस्वरयोर्मध्ये अनेके स्वराः मध्यगताः कल्पयितुं शक्याः। स्वरश्रवणेन स्वरोच्चारकमनुष्यज्ञानं अनुभवात् सम्भवति। त्वाचप्रत्यक्षं —त्वग्द्वारा सन्धिबन्धद्वारा मांसलत्वग्द्वारा च स्पर्शप्रत्यक्षं जायते। शरीरे त्वगिन्द्रियपाटवं सर्वत्र नैकरूपं वर्तते। क्वचिद्देशे पटु क्वचिन्मन्दं त्वाचज्ञानं भवति। स्वशरीरान्यशरीरज्ञानं अनुभूतचाक्षुषप्रत्यक्षबलाज्जायते। केवलं त्वगिन्द्रियेण वस्तुमृदुत्वादिज्ञानमिव वस्तुरूपज्ञानमपि न सम्भवति। त्वग्द्वारा देहावयवभ्रमणं ज्ञातुं शक्यते। त्वाचज्ञानेन देशनिर्धारणं न कर्तुं शक्यते। गुरु वस्तु हस्ताभ्यामुत्थापितं चेत् तदा गुरुत्वप्रतीत्या साकं उच्छ्वासाधिक्यं उरस्स्थलोन्नतिः बाह्वोरुन्नमनं—इत्यादिप्रतीतिः जायते। मृदुवस्तुस्पर्शानन्तरं कठिनवस्तुस्पर्शे कृते कठिनं कठिनतरमिव ज्ञायते। शीतोष्णज्ञानमपि शरीरे भिन्नभिन्नप्रदेशे भिन्नभिन्नप्रमाणमवगम्यते। एकविधा अपि शब्दादयः अनेकैर्मनुष्यैरेकधा यथास्थिति न ज्ञायन्ते। एतादृशभेदे तत्तदीयेन्द्रियसौष्ठवे तारतम्यमेव कारणम्। केचन रूपान्धा अपि वर्तन्ते। केचन नीलान्धाः केचन पीतान्धाः इति रूपप्रतिपत्तौ भूयान्भेदो वर्तते। स्वरज्ञाने केचन स्वरेषु तारतम्यमवगन्तुं न शक्नुवन्ति॥

किं च गन्धरसादीनामौत्कट्यं तत्तत्प्रतीतिप्रतिबन्धकमिति ज्ञायते। अत्युत्कटो गन्धः रसो वा नावगम्यते। किं च उत्कटरसाद्यास्वादनेन रसनेन्द्रियस्य मन्दता भवति। इत्थमेव उत्कटविषयानुभवेन तत्तादिन्द्रियमान्द्यं सम्भवतीति ज्ञायते। किं च अतिमधुरो रसः मधुर इव नावगम्यते। अत्युच्चस्स्वरः स्वसौन्दर्यं जहाति।

धारणाशक्तिः

सर्वं प्रत्यक्षज्ञानं स्मृतिशबलितमेव वर्तते इत्युक्तम्। स्मृतिश्च धारणाशक्तिं विना न प्रभवति। सा शक्ति स्सर्वेषामपि नैकरूपा वर्तते। केषांचित्तीव्रा। केषांचिन्मन्दा अपरेषा न्नातितीव्रा नातिमन्दाऽपीति प्रतिमनुष्यं धारणाशक्तिः भिद्यते। अग्निचूर्णो हि गन्धकादिवस्तुत्रयसंयोगेन क्रियते। कश्चन सैनिकः अनेकवारमुपदिष्टोऽपि तेषु त्रिषु वस्तुषु वस्तुद्वयमात्रमेव स्मर्तुं नाम्ना निर्देष्टुं च समर्थोऽभवत्। नैकदा वस्तुत्रयमपि स्मर्तुं सोऽशक्नोत्।

अनेकेषु वस्तुषु बहिरिन्द्रियाणां विषयीभूतेष्वपि प्रायेण द्रष्टा पञ्च षड्वाऽवधारयितुं शक्नोति। षोडशेभ्योधिकान् विछिन्नशब्दान्न कोऽप्यवधारयितुं शक्नोति। त्वचा नाष्टाभ्योऽधिकान्विषयानवगन्तुं शक्नोति—इत्यवधारणाशक्तिरिन्द्रियपाटवं च प्रतिमनुष्यं भिद्यते।

स्मृतिः ऊहा च.

स्मृत्यूहौ ज्ञानभेदौ। पूर्वानुभूतं यद्भाति पूर्वानुभूतत्वेन सा स्मृतिः। इदमित्थं कृतं चेत्सुन्दरमिति यन्मनसा कल्प्यते तादृशकल्पनासाधनज्ञानं ऊह इति स्मृत्यूहयोः भेदः। चिन्तानन्तरं स्मृतिरुत्पद्यते। स्मृत्यनन्तरं ऊहः जायते। धारणाशक्तिः स्मृतेः कारणम्। धारणाशक्तौ जनानां भूयान्भेदो वर्तते। अन्यूनानतिरिक्तं विषयस्मरणं

धारणाबलाज्ज्ञायते । स्मृत्या भूतवर्तमानयोरेकीकरणं निष्पाद्यते । यद्य-त्स्वसुखदं तत्तद्धार्यते स्मर्यते च । स्मृतिरेव "सोऽयम्" इति प्रत्यभिज्ञारूपेण परिणमति । भूयोभूयोदर्शनश्रवणादिना धारणापाटवं स्मृतिनैपुण्यं च प्रादुर्भवतः । स्मृतविषयान् नानाप्रकारेण सन्निवेश्य चित्रकारः चित्रपटमिव ऊहः विषयवैचित्र्येण नवनवविषयविशेषान् सृजति । नात्र विषयाः कल्पिता भवन्ति किं तु अनुभूतानामेव विषयाणां संयोगविभागकल्पना चातुर्यमेव ऊहेन प्रदर्श्यते ; यथा कालिदासादयः शाकुन्तलादिनाटकसन्दर्भेषु ऊहशक्तिं प्रदर्शयन्ति तथा शिल्पिनोऽपि वस्तूनामवयवसन्निवेशकल्पनाचातुरीं प्रदर्शयन्ति ।

एवमेव गणितशास्त्ररचनायां तत्त्वबोधकशास्त्ररचनायां च ऊह-शक्तिप्रदर्शनं विचक्षणैः कृतं बाढं दृश्यते ।

भावाः.

रागः क्रोधः द्वेषः भयं शङ्किः हर्ष आश्चर्यं मात्सर्यं मैत्री करुणा— इत्यादयो मनोऽवस्थाविशेषाः इन्द्रियार्थसन्निकर्षजन्याः भरत-खण्डीयैरालङ्कारिकैः स्पष्टं विशदीकृता एव । सुखं दुःखमिति द्वावेव भावाविति केचन वदन्ति । ताभ्यामन्ये आश्चर्याद्भुतभयशोकशान्त्या-दयो भावा॰ अनेके वर्तन्ते इत्यपरे वदन्ति । शृङ्गारादिनवस्थायिभावाः तदुद्दीपकाः तदालम्बनाश्च विभावनामका भावाः तत्सहकारिणो भावाः व्यभिचारिभावव्यपदेश्याः तत्कार्यभूता अनुभावास्सात्त्विकभावाश्च स्पष्टं आलङ्कारिकग्रन्थेषु वर्णिता इति न तद्विषयचर्चाऽत्र क्रियते ।

भावाश्चतुर्धा वर्तन्ते (१) इन्द्रियार्थसन्निकर्षजन्याः (२) मानसिकाः बौद्धाः (३) आलङ्कारिकाः (४) धर्माधर्मविषयकाश्चेति ॥

(१) शब्दादिविषयेषु सुखदुःखानुभवेन यदा रागद्वेषादयो जायन्ते

ते भावा इन्द्रियार्थसन्निकर्षजा इति व्यवह्रियन्ते मनोऽव्यग्रताबाधका: भावाः दुःखदा एव । विषयसन्निकर्षे रागाद्यौत्कव्यं दुःखदम् । रूपरसादिषूद्भूतत्वं केषां चिद्दुःखदम् । अन्येषां सुखदम् । रक्त-दर्शनेन केषां चित् दुःखम् । प्राणिहिंसादर्शने केषां चिन्मू-र्च्छैव जायते । सुखदुःखादिवेदनाः आरोहावरोहौ कुर्वाणा अनु-भूयन्ते । एकक्षणे तीव्रतरा बाधा द्वितीयक्षणे सह्या तृतीयक्षणे असह्या इत्यारोहावरोहौ दृश्येते । अतिहर्षः अत्याशा अतिकामः अतिक्रोधः अतिभय—चेत्यादय उत्कटतमा भावाः स्वाश्रयनाशका भवन्ति कदा चित्स्वयमपि नश्यन्ति ।

(१) भावानुभवे क्रमः आनन्ददः भवति—यथा नृत्यादिकम् । विषयभानं पुनः पुनः क्रमेणावृत्तं चेदानन्ददं भवति । हठाद्विषयभेद-भानं दुःखदम् । विषयवैचित्र्यं च सुखदम् । एकैकोऽपि भावः शिर-स्थास्सर्वा नाडिका उपजीव्य प्रभवति । पुनः पुनरभ्यस्ता भावा मृग-याद्यासक्तय इव व्यसनानि भवन्ति । तीव्रत्वाशून्या भावा अभिप्राया इत्युच्यन्ते ।

(२) बौद्धा बुद्धिगता भावाः विद्याविषयकाः । केचिद्गणिते रमन्ते । केचित्काव्ये केचिद्भौतिकादिशास्त्रे इति बौद्धभावभेदाः ।

(३) किं वा सहृदयहृदयाह्लादकरमिति जिज्ञासन्तो जनाः चित्ररचनायां नाटकादिरचनायां प्रवर्तन्ते ।

(४) केचिद्धर्माधर्मचिन्तकाः किं सत्कार्यं किं वा दुष्टमिति जिज्ञासन्ते ।

इति विषयाभिलाषेण वा, विद्याभिलाषेण वा सौन्दर्याह्लादानन्दा-भिलाषेण वा धर्माधर्मतत्वाभिलाषेण वा जनाः स्वाभिरुच्यनुसारेण भावविवशा भवन्ति ॥

## मेयाजिज्ञासा.

चाक्षुषादिं पञ्चप्रत्यक्षज्ञानानि मानसज्ञानेन षड्विधानि प्रत्यक्षज्ञानानि विवृतानि । तादृशषड्विधज्ञानानां करणानि चक्षुरादीनि पञ्चबहिरिन्द्रियाणि मनसा सह षट्सम्पद्यन्ते । एतादृशप्रत्यक्षज्ञानैः शब्दादयः विषयाः प्रत्यक्षीकृताः जातिरूपाः पदवाच्या भवन्ति । रूपमिति पदं रूपसामान्यं बोधयति । एवं रसः रससामान्यं व्यनक्ति । शब्दः शब्दसामान्यम् । तदित्थं नामवाचकानि सर्वाण्यपि पदानि तत्तन्नामवाच्यजातिद्योतनद्वारा व्यक्तीरपि बोधयन्ति । एवं गुणवाचकानि क्रियावाचकान्यपि तत्तद्गुणत्वरूपजातिद्योतनद्वारा तत्तत्क्रियासामान्यद्योतनद्वारा विशेषगुणव्यक्तीः विभिन्नक्रियास्वरूपाणि च बोधयन्ति । इत्थं प्रत्यक्षगोचराः विषयाः गणशो विभज्य प्राणिवर्गः, सस्यवर्गः, औषधिवर्गः, चेतनवर्गः, अचेतनवर्गः, पाषाणवर्गः, अब्वर्गः, तैजसवर्गः, इत्यादिरीत्या जातिविभागः कृतो दृश्यते ॥

प्रतिव्यक्ति ये गुणा धर्मा वा दृश्यन्ते ते तज्जातावपि वर्तन्ते इति व्याप्तिं गृहीत्वा प्रत्येकं व्यक्तीनां सर्वासां दर्शनाभावेऽपि सामान्यलक्षणाप्रत्यासत्त्या सादृश्येन वा सर्वास्वपि व्यक्तिषु ते धर्माः वर्तन्ते इत्यनुमितं आसीदिति ज्ञायते । तदित्थं देवदत्तादिचेतनेषु सुखदुःखाद्यनुभवं दृष्ट्वा यच्चेतनं तत्सुखदुःखाद्याश्रयभूतमिति यच्चाचेतनं तत्सुखदुःखाद्यनुभूतिविरहमित्येवं पुरातनैर्निष्कर्षः कृतो वर्तते किं च आत्मा कर्तृत्वभोक्तृत्वाद्याश्रयो वा उत बुद्धिः तदाश्रयभूता वा इति सन्देहे साङ्ख्याः बुद्धिं कर्तृत्वाद्याश्रयभूतेति वदन्ति । तदपरे न सहन्ते । व्याप्तिज्ञानं ह्यनुमितिकरणम् । मनस्तत्वपरीक्षायां कृतायां व्याप्तिज्ञानमेव न प्रमेति ज्ञायते । भूयोदर्शनेन हि व्याप्तिः गृहीता । न तु सर्वासां व्यक्तीनां दर्शनेन ।

सर्वा अपि व्यक्तयः दुर्दर्शा एव। उदकेन विना ये म्लायन्ते ते प्राणिन इत्येकं व्याप्तिज्ञानम्। तदिदं व्याप्तिज्ञानं न सर्वान्प्राणिनो जलाभावेन म्लायमानान्दृष्ट्वा गृहीतम्। किं तु कांश्चिदेव सन्निहितान्। उदकेन विनाऽप्यम्लायमाना लतादिरूपाः प्राणिनः केवलसिकतामयदेशेषु दृश्यन्ते।

तदित्थं भूयोदर्शनेन गृहीतं व्याप्तिज्ञानं प्रमेति वक्तुं को वा शक्नुयात्? सुखदुःखाद्याश्रयाः चेतना इति व्याप्तेः विरुद्धाः सुखदुःखाद्यनाश्रयाश्चेतना न सन्तीति कथं वा जनो निश्चिनुयात्? कालक्रमेण जनः सुखदुःखाद्यनाश्रयान् चेतनान् उपलभेत। इति पाश्चात्या विद्वांसः वदन्ति। प्रत्यक्षज्ञानं व्याख्यानमिव क्वचित्सत्यम्। क्व चिद्भ्रान्तम्। क्व चित्सत्यासत्यमिश्रमिति पूर्वमेव प्रतिपादितम्। तदित्थं प्रत्यक्षज्ञानेऽश्रद्धेये सति तन्मूलकं व्याप्तिज्ञानं कथं वा प्रमाणं स्यादिति प्रमाणप्रामाण्ये सन्दिहन्ति। एतादृशसान्दिग्धप्रामाण्येन प्रमाणेन विरचितानि शास्त्राणि कथं वा श्रद्धेयानि स्युः? इति पुरातनानि धर्मशास्त्राध्यात्मशास्त्राणि सर्वाण्यप्रमाणानीति च वदन्ति[1] ॥

**विषयप्रत्ययाः.**

चाक्षुषा श्श्रौत्राः घ्राणाः त्वाचा रासनाश्च प्रत्यया शबलिता मनसि वर्तन्ते। यदा ते वर्षानन्तरं वर्षद्वयानन्तरं वा स्मर्यन्ते तदा ते मनस्युद्भूताः प्रतीयन्ते। अत्र तावदियान्भेदो दृश्यते—यथा ते पूर्वं स्फुटं अनुभूतास्तथा ते न प्रतीयन्ते किं तु किं चिन्म्लाना इव भान्ति। एते प्रत्ययाः विषयप्रतिकृतय इति पाश्चात्यै र्विद्वद्भिरभिधीयन्ते। यद्यपि साकारस्थूलवस्तूनामिव गन्धादीनां गुणानां प्रति-

[1] अत्र पाश्चात्यै अन्यानि उदाहरणानि दत्तानि। तानि भरतखण्डे अप्रसिद्धानीति भरतखण्डे प्रसिद्धानि उदाहरणानि दत्तानि ॥

कृतयो न मनसि रच्यन्ते । तथाप्यनुभूतगन्धादिगुणानां स्मर्यमाण-गन्धादिगुणानां च किंचित्साम्यं वर्तत इति स्मृतिविषया स्सर्वेऽपि पूर्वानुभूतविषयप्रतिकृतय इत्यभिधीयन्ते ॥

मनोऽव्यग्रतां विनानुभूता विषया कालानन्तरं म्लाना भूत्वा स्मृतिपथं नारोहन्ति । गुरुत्वप्रत्ययाः दशविनाडिकानन्तरं न स्मर्यन्ते। निरर्थकशब्दजालश्रवणं न मासान्तरं स्मृतिपथमारोहति । केषां चिन्म-नोऽव्यग्रताबलादनुभूता विषया यथापूर्वमिव स्मृतिपथमारोहन्तीति ज्ञायते । प्रत्ययाः प्रत्ययान्तरसूचका अपि सन्ति । यत्र प्रत्यययोः कार्यकारणभावः संज्ञासंज्ञिभावः अवयवावयविभावः आधाराधेयभाव इत्यादयस्सम्बन्धा वर्तन्ते ते प्रत्ययास्सर्वेऽपि मनस्युद्भूता भवन्ति । अत्र द्रष्टृस्वभावः दृश्यवैशद्यमपि कारणं भवति ।

### पदार्थः वाक्यार्थश्च.

जातानां बालानां नामकरणं कृत्वा जनाः तत्तन्नाम्ना तांस्ता-न्बालानाह्वयन्ति । तथा प्रत्ययानामपि पूर्वं नामानि दत्तानि वर्तन्ते। तथा च केषांचित्प्रत्ययानां रूपमिति अन्येषां घटः इति अपरेषां पट इति प्रतिप्रत्ययं अभिधाशब्दः कल्पितो वर्तते । अत्र बालनाम-धेयप्रत्ययनामधेययोरियान्विशेषः—मनुष्यनामधेयं एकमेव मनुष्यं बोधयति यथा देवदत्त इति देवदत्तमेकमेव । प्रत्ययाभिधानन्तु प्रत्य-यविषयीभूतवस्तुसामान्यं बोधयति—यथा रूपमिति शुक्लरक्तपीतहरि-तकपिशादीन् सर्वान्बोधयति । शुक्लरूपमिति नानावस्तुगतं शुक्लरूपं बोधयति । तदित्थं प्रत्यया जातिं बोधयन्तः एकैकव्यक्तिमपि तत्त-ज्जातीयामवगमयन्ति । प्रत्ययाभिधानान्येव पदानि । अतः पदार्थाः प्रत्ययाः भवन्ति । योग्यतामनुसृत्य क्रियासमभिव्याहारेण पदानां सम्मेलनं वाक्यम्। तस्य अर्थः वाक्यार्थः । यथा "वह्निर्दहति" इति.

प्रत्ययोत्पत्त्यनन्तरमेव प्रत्ययानां नामानि दद्यात् । न तु पदानुरोधेन प्रत्ययानामुत्पत्तिः । यदा कश्चन जनः अनेकस्थलेषु गजं दृष्ट्वा "कोऽयं मृगः मयादण्डकारण्ये दृष्टः; तदनन्तरं जयपुरे तत्सदृशोऽन्यो दृष्टः । तदनन्तरं बहुषु प्रदेशेषु तत्सदृशा मृगा गणशो दृष्टाः" इत्यपरं पौरं पृच्छति स पौरः "अस्य मृगस्य गज इति नामेति वदति । तथोक्तस्य ग्राम्यः जनः गजजातिं ज्ञात्वा गजशब्दं जातौ शक्तं व्यक्तौ च शक्तं बुद्ध्वा गजपदप्रयोगं करोति । तदित्थं नामवाचकादिशब्दोत्पत्तौ नामवाचकादिबोधितार्थसामान्यज्ञानं कारणमिति स्पष्टं ज्ञायते । काचन फ्रूञ्चदेश्या वनिता स्वसुतया वर्षद्वयवयस्कया "गुप्तान्वेषणं" नाम क्रीडनकं क्रीडमाना अवर्तत । सा सुता गुप्तान्वेषणं "कौकौ" इत्यभिदधे । "तत् दहति" इत्यर्थे "क ब्रूले" इत्युच्चचार । कदा चित्क्रीडाकाले सूर्योऽस्तमगात् । तदानीं सा बाला "गुप्तान्वेषणं सख्यः कुर्वन्त्विति सूर्य आत्मानं गूहते स्म" इत्यर्थे "कौकौ कब्रूले" इति अस्तं गच्छन्तं सूर्यं निर्दिशन्ती उच्चचार । अत्र सूर्यास्तं स्वीयगूहनमिवेति सादृश्यज्ञानेन तत्र कौकौशब्दं सा प्रायुङ्क्त ॥

### शीलम्.

विषयज्ञानोत्तरकाले इच्छा अङ्कुरति । उत्कटेच्छया यत्ने मनः प्रवर्तते । ज्ञानेच्छाकृतयः क्रमेण प्रादुर्भवन्तीति तार्किका वदन्ति । इच्छाभावेऽपि कदाचित्कृतिर्दृश्यते । इच्छां विनैव देहावयवा कदा चिच्चलन्ति । निद्राणोऽपि मनुष्यः मुखोपरि मक्षिकादिस्पर्शमनुभवन् हस्तविधूननेन मक्षिकानपसारयति । नेयमपसारणक्रिया ज्ञानपूर्विका । इन्द्रियार्थसान्निकर्षाच्छिरसि जाता दुःखानुभवधारा सर्वं देहमाप्लाव्येच्छां विनाऽपि तत्तदवयवान् यथास्वभावं चालयति । शिशवः

स्वहस्तपादान् बहुधा चालयन्ति । नात्रेच्छा कारणम् । गन्धानुभवेन नासिकाग्रविकृतिः प्रभामत्यक्षेण शिरसः पार्श्वापवर्तनं शब्दश्रवणेन हठाच्छिरसो वल्गनं चेच्छां विनैव सम्भवति । एवं सुखदुःखान्यतरवेदनाऽपि यत्र यत्र देहे सुखप्रतीतिः दुःखप्रतीतिर्वा भवति तत्तदवयवं चालयति । प्रकृतिसिद्धं किंचिच्चलनं प्रतिप्राणि नियतं वर्तते । पदार्थबोधजनितानि देहावयवचालनानि सर्वेषामनुभूतपूर्वाण्येव । बालैः अनुकरणचालनानि भूयो भूयः क्रियन्ते ॥

इच्छापूर्विकाः कृतयः फलेच्छया जायन्ते । अनेकेषु फलेषु दृश्यमानेषु यत्रेप्सा गरिष्ठा तत्र प्रवृत्तिर्जायते । केषां चिदिच्छा पशूनामिव केवलं रागवशात्स्वैरिणीव प्रवर्तते । अन्येषां विजितकामक्रोधादीनामिच्छा नियन्त्रिता प्रवर्तते । स्वैरेच्छा पशुप्रवृत्तिसमानप्रवृत्तिजननी । धर्माधर्मविवेकपूर्विकां प्रवृत्तिं यत्रेच्छा जनयति, तादृशप्रवृत्तिः सतां प्रवृत्तिरित्युच्यते ॥

पुनःपुनः क्रियमाणा प्रवृत्तिः शीलमित्युच्यते । प्रवृत्त्यां दुष्टायां दौश्शील्यमिति प्रवृत्त्यां साध्व्यां सौशील्यमिति च जना व्यवहरन्ति । केचन मैत्रीशीलाः ; केचन परदुःखप्रहाणशीलाः ; केचन परोपकारशीलाः; केचनौदार्यशीलाः ; केचन सत्यशीलाः ; केचन धर्माचरणशीलाः ; केचन विद्याविनोदशीलाः ;—एतादृशास्सर्वेऽपि सौशील्यभाज इत्यभिधीयन्ते । केचन परदुःखजननशीलाः ; केचन कलहोत्पादनशीलाः ; केचन अन्यदुःखोत्पादनपूर्वकात्मसन्तोषसम्पादनशीलाः इति बहुविधा दुश्शीला जना वर्तन्ते । नाटकादिषु नायकनायिकानां सौशील्यमिव दौश्शील्यमपि चमत्कृतिजनकं भवति । सौशील्यदौश्शील्ये यथावद्वर्णिते वा नवेति परीक्षणीयम् ॥

रसिकारसिकदीनदान्तशान्तक्रुद्धहिंस्रप्रकृतीनां कथं तादृश-

शीलान्युत्पन्नानीति कारणविवेकः नाद्याप्यवगतः । केचन प्रकृत्यैव वितण्डावादिनः, केचन विरुद्धवादिनः ; केचन आत्मश्लाघनतत्पराः केचन बहुभाषिणः, केचन मितभाषिण इति वैचित्र्यं सर्वेषां विदितमेव ।।

### स्त्रीपुरुषभावाः.

स्त्रीपुरुषयो श्शिरोगुरुत्वं १.२७२: १.४७४ सङ्ख्यावैषम्य सदृशं वर्तते । स्त्रीणां नाडीस्पन्दः अधिकः पुरुषाणामल्पः । स्त्रीणां रक्तं श्वेतं न्यूनं च । स्त्रियोऽत्यधिकंचपलचित्ताः । स्त्रीणां भावविकाराः क्षणिकाः । स्त्रियः पुरुषेभ्योऽप्यधिकतरमास्तिकमतयः । वयोभेदेन च भावविकाराः जनेषु भिद्यन्ते । बालस्तावत्क्रीडासक्तः तरुणस्तावत्तरुणीसक्तः । वृद्धस्तावच्चिन्तासक्तः परेब्रह्मणि कोऽपिनसक्तः।। इति शङ्करभगवत्पादानां सूक्तिरेनमेवार्थं द्रढयति ।

मनुष्येष्वपि देशवर्णादिभेदेन शीलरूपेण परिणता भावविकाराः भिद्यन्ये । चिनाः महम्मदीयाश्च शीले भरतखण्डीयेभ्यो भिद्यन्ते । सर्वेऽपि प्राच्याः पाश्चात्येभ्यश्शीले भिद्यन्ते । पश्चात्याः कार्यदक्षाः प्रयोगनिपुणाः शिल्पकुशलाः । प्राच्याः ऊहाप्रगल्भाः परलोकपरतत्वविमर्शकाः त्यक्ताशिल्पाः । महम्मदीयाः कोपप्रकृतयः युयुत्सवः । भरतखण्डीयाः शान्तिप्रकृतयः युद्धभीताः । इत्यादिभेदाः ज्ञातपूर्वा एव ।

खगोलशास्त्रादिषु यथा ग्रहगतिगणितं नियतं वर्तते न तथा मनस्तत्वशास्त्रे मनोव्याप्तितिर्नियता वर्तते । तथापि सर्वत्रापि जनतायां मनस्समानवृत्ति दृश्यते । मनोवृत्त्याः विच्छित्तिर्नैवास्ति । आबाल्यादा च मरणान्मनोवृत्तिरविच्छिन्नप्रवाहा वर्तते । शब्दादिविषयावगमः सर्वदा जनस्य भवत्येव । शब्दादिविषयज्ञानानि परस्पर-

साकाङ्क्षाणि परम्पराविकृतिजनकानि च । नेषु ज्ञानेषु नैकमप्यन्यामिश्रं स्वतन्त्रं प्रवर्तते । विषयसम्बन्धेन ज्ञाने भेदः । विषयविगळितं ज्ञानमेकाकारं वर्तते । तत्त्वाद्वयमविकृतं च वर्तते । क्षणिकाचिन्तानामपि ज्ञाने क्षणिकत्वं प्रकृत्या दृश्यते । तथा क्षणिकताबीजरूपविषयसम्बन्धविगळितं चेत् तेषां ज्ञानमेकाकारमेव ।

ज्ञानधारा फलोद्देशेन प्रवर्तमानेव ज्ञायते । ज्ञानं स्वतन्त्रं निरभिसन्धि यतमानं वर्तते ।

आर्. शामशास्त्री.

# विशिष्टाद्वैतम्.

(अनुवृत्तम्)

अन्तर्गुणा भगवती परदेवतेति
प्रत्यग्गुणेति भगवानपि भाष्यकारः ।
आह स्म यत्तदिह निर्गुणवस्तुवादे
संगच्छते न तु पुनस्सगुणप्रवादे ॥ २२१

अद्वैतमेव ब्रह्मनन्दिग्रन्थे विवक्षितं, न परिणामादीत्येतत् तद्भाष्यकृद्द्रमिडाचार्यवचनादवसीयते इत्याह—अन्तर्गुणेति ॥

अनेन संक्षेपशारीरकप्रबन्धेन वाक्यकारो ब्रह्मनन्दी आत्रेयवंश्यः तदीयवाक्यग्रन्थस्य भाष्यकारः द्रमिडाचार्यः । वाक्यभाष्यादिकं छान्दोग्योपनिषदा विवेति स्पष्टं प्रतिपादितं भवति ॥

भर्तृप्रपंचस्तु स्वाभाविकभेदाभेदवादीति बृहदारण्यकोपनिषद्भाष्ये श्रीशाङ्करे स्पष्टम् । ब्रह्मदत्तस्तु जीवानामुत्पत्तिवादीति सर्वार्थसिद्ध्यादिषु स्पष्टम् । स च पूर्वमीमांसाया अपि वृत्तिकार इति तन्मतं बहुशः श्लोकवार्तिके कुमारिलेन दूषितमवगम्यते । भेदाभेदवादोऽपि कुमारिलेन नामानुल्लिख्य दूषितोऽस्ति । भर्तृहरिस्तु वाक्यपदीये शब्दाद्वैतं स्थापितवान् । तदीयो वेदान्तप्रबन्धः न क्वापि समुद्धृतोऽस्ति ॥

भास्करभाष्यं सम्यगुपलभ्यते । तत्रोल्लिखितं छान्दोग्यभाष्यं गीताभाष्यादिकं च लुप्तप्रायमिति जानीमः । तदेतद्भास्करभाष्यं श्रीवाचस्पतिमिश्रीयभामतीप्रबन्धात् प्राचीनं, यतः तदीयानि वाक्यानि

भामत्यामुदाहृतानि बहून्युपलभ्यन्ते । इदमेकमुदाहरणं—तत्र २०८ पुटे परिदृश्यमानं —"भ्रान्त्या चलौकिकं कर्म वैदिकं तु तथाऽस्तुते" इति वचनं ३-४-२६ सूत्रे भामत्यां घृतमुपलभ्यते । एवमादिना कारणेन श्रीशांकरब्रह्मसूत्रभाष्यस्यातिसन्निहितमिदमिति स्फुटम् ॥

तत्रेदमवधारणीयं—८५ पुटे "मन्त्रकारः श्रुत्यनुकारी परिणामपक्षं सूत्रयांबभूव । अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां संप्रदायतस्समाश्रितः । तथा च वाक्यं—"परिणामस्तु स्याद्दध्यादिवत्" इति पाठो दृश्यते ॥

भामत्यां तु १-४-२७ सू ॥ "परिणामात् । योनिश्च हि गीयते । इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेण । अपि तु यथा सर्पस्य उपादानं रज्जुः एवं ब्रह्म जगदुपादानं द्रष्टव्यम्" इत्यस्ति ॥

अत्र कल्पतरुः—"भास्करस्त्विह बभ्राम योनिरिति परिणामादिति सूत्रनिर्देशात् छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना "परिणामस्तु स्यात्" इत्यभिधानाच्च परिणामवादः वृद्धसम्मत इति तं प्रतिबोधयति—इयं चेति ॥ ब्रह्मनन्दिना हि "नासतोऽनिनिष्पाद्यत्वात् । प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्" इति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य "न—संव्यवहारमात्रत्वात्" इत्यनिर्वचनीयता सिद्धान्तिता । परिणामस्त्विति मिथ्यापरिणामाभिप्रायः । सूत्रं त्वेतदभिप्रायमेवेत्यर्थः ॥ इति ॥

अनेन संदर्भेण वाक्यकारं तद्भाष्यकारं च सर्वेऽपि वादरायणमिव स्ववशीकृत्य प्रमाणीकुर्वन्तीति विजानीमः ॥ तत्र—

भास्करभाष्योदाहृतं "परिणामस्तु स्याद्दध्यादिवत्" इत्यत्र वाक्ये "दध्यादिवत्" इत्यंशस्योदाहरणं कल्पतरुकारैर्न कृतम्। तत्र किंस्यात्कारणमिति विमृशन्तु विपश्चितः॥

अत्रेदं बोध्यम्—१-४-२६ श्री शांकरसूत्रभाष्ये—"तदात्मानं स्वयमकुरुत इत्यात्मनः कर्तृत्वं कर्मत्वं च दर्शयति। आत्मानमिति कर्मत्वं स्वयमकुरुतेति कर्तृत्वम्। कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुम्। परिणामादिति ब्रूमः" इति॥

तथा २-१-१४। सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह। व्यवहाराभिप्रायेण तु स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति। अप्रत्याख्याय हि कार्यप्रपञ्चं पारिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यतीति। इति दृश्यते। ततश्च परिणामपक्षोऽपि व्यवहारदृष्ट्या सूत्रकृदभिप्रेत इति भाष्यकार एव प्राह। एवं सति भामत्यामुक्तं "इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेणेति" वाक्यं अप्रकृतमिति परे प्राहुरिति॥

## एतानि वृत्तिग्रन्थवाक्यानि.

१. जिज्ञासाधिकरणे—वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति॥

२. जिज्ञासाधिकरणे—संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति॥

३. ईक्षत्यधिकरणे—सता सोम्य तदा सम्पन्नो भवतीति सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते। प्राज्ञेनात्मना सम्परिष्वक्त इति चाहेति॥ [एतत् ब्रह्मकारणत्वम्]

४ सर्वत्रप्रसिद्धयधिकरणे-- सर्वं खल्विति सर्वात्मा ब्रह्म ईशः ॥

५. भूमाधिकरणे---भूमात्वेवेति भूमा ब्रह्म नामादि परम्परया आत्मन ऊर्ध्वमस्योपदेशादिति ॥

६. मध्वधिकरणे—अस्ति हि मध्वादिषु सम्भवः, ब्रह्मण एव सर्वत्र निचाय्यत्वादिति ॥

७. जगद्व्यापारवर्जाधिकरणे--जगद्व्यापारवर्जं समाना ज्योतिषेति ॥

एतानि वाक्यवाक्यानि.

१. जिज्ञासाधिकरणे—वेदनमुपासनं स्यात् तद्विषये श्रवणात् । सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत् । सिद्धं तूपासनशब्दात् । उपासनं स्याद्ध्रुवानुस्मृतिः । दर्शनान्निर्वचनाच्च ॥

२. तल्लब्धिः विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च । जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः । विमोकः कामानाभिष्वङ्गः । आरम्भणसंशीलनं पुनःपुनरभ्यासः । पञ्चमहायज्ञाद्यनुष्ठानं शक्तितःक्रिया । सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि । देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यं अभास्वरत्वं मनसोऽवसादः । तद्विपर्ययजा तुष्टिरुद्धर्षः ॥

३. पुराणषट्कं युक्तं तद्गुणकोपासनात् ॥

४. वेदार्थसङ्ग्रहे १७२--तस्मिन् यदन्तरिति कामव्यपदेशः ॥

५. आत्मेत्येव १७६ तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः ॥

६. ... हिरण्मयः पुरुषो दृश्यत इति प्राज्ञस्सर्वान्तरस्स्यात् । लोककामोपदेशात् । तथोदयात्पाप्मनामिति । स्याचद्रूपं कृतकं, अनुग्रहार्थं तत् चेतनानामैश्वर्यात् । रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात् । [यदा-

त्मको भगवान् तदात्मिका भगवतो व्यक्तिः] इत्यधिकं मुण्डकभाष्ये ॥

७. हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत् ॥ [रूपमौज्ज्वल्यमिति तात्पर्यदीपिका] ॥

८. आदित्याक्षिस्थं वा श्रीमत्त्वात् (कप्यासवाक्यार्थे) वेदार्थसंग्रहः ॥

९. श्रुतप्रकाशिका—२य मङ्गळपद्ये—उपनिषण्णत्वाद्वा उपनिषत् । गहने ह्ययं विद्या सन्निविष्टेति तद्विषयं द्रमिडभाष्यम् । गहने ब्रह्मण्युपनिषण्णेति तद्विषया वामनटीका ॥

१०. नासतोऽनिष्पाद्यत्वात्। प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात् । न संव्यवहारमात्रत्वात् ॥ संक्षेपशा ॥

११. परिणामस्तुस्याद्दध्यादिवत् ॥ भास्करभा ॥

एतानि—द्रमिडभाष्यवाक्यानि.

१. श्रुतप्रकाशिका—१मश्लोके-नमः प्रवरगुणैकास्पदायास्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे नमो जैमिनये वेदरहस्यसंपुटानिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे नमोस्त्वाचार्येभ्यः" इति ॥

२. श्रीभाष्ये लघुसिद्धान्ते—निर्वचनं स्मार्तमुदाहृतं भाष्यकारेण—सदा तद्भावभावित इति । अत्र श्रुतप्रकाशिका—पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते । इति ॥ अत्र तत्त्वटीकाच—अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः । इति ॥

३. श्रीभा॥ २-१-५ यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसंकटेऽपि प्रदेशे वर्तमानः व्यजनावधूतदेहः दोषैर्नस्पृश्यते । अभिप्रेतांश्च लोकान्पालयिष्यति । भोगांश्चगन्धादीनविश्वजनोपभोग्यान्

धारयति तथाऽसौ लोकेश्वरः अमरत्वसामर्थ्यचामरः दोषैर्न स्पृश्यते रक्षति च लोकान् ब्रह्मलोकादीन् । भोगांश्चाविश्वजनोपभोग्यान् धारयतीति ॥

४. श्रीभा ॥ देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थ-सिद्धिस्स्यात् ॥ 'अशरीरः कर्मकृतशरीररहित इति अत्र श्रुतप्रकाशिका। द्र-भा-स्यस्याज्ञया धावति वायुः नद्यस्स्रवन्ति । तेन च कृतसीमानः जलाशयाः समदाइव मेषविमर्षिनं कुर्वन्ति । तत्संकल्पानिबन्धना हीमे लोकाः न च्यवन्ते न स्फुटन्ति । स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात्स भगवान् वर्धयेत । विद्वान् कर्मदक्ष इति ॥

१. वेदार्थसंग्रहे —२३८-पु (६वाक्यव्याख्या) अजसैव विश्व-सृजो रूपं तत्तु न चक्षुषा ग्राह्यं मनसात्वकलुषेण साधनान्तरवता गृह्यते "न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन" इति श्रुतेः । नह्यरूपाया देवताया रूपमुपादिश्यते. यथाभूतवादि हि शास्त्रम् । माहारजनंवासः. वेदाहमेतं पुरुषं महान्तं आदित्यवर्ण तमसः परस्तात् इति प्रकरणान्तरनिर्देशाच्च साक्षिणः ॥

वाक्यव्या—नमयऽत्र विकारमादाय प्रयुज्यते । अनारभ्यत्वा-दात्मनः । इति ॥

माण्डूक्यकारिकावैतथ्यप्रकरणे—३२ शं। भा। सिद्धं तु निवर्तक-त्वादित्यागमविदां सूत्रम् । इति अत्रानन्दगिरिः—उक्तेर्थेद्रमिडा-चार्यसम्मतिमाह — सिद्धंत्विति । ब्रह्माणि पदानां व्युत्पत्त्यभावेपि सिद्ध-मेव शास्त्रप्रामाण्यं. अभावबोधनव्युत्पन्ननञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेन अध्यस्तनिवर्तकत्वादितिसूत्रार्थः ॥

अत्रेदमपि बोध्यं— मायावादखण्डनटीकायां श्रीजयतीर्थाचार्य-प्रणीतायां २पु—" अथापिस्यात्-भवेदिदं शास्त्रस्य सिद्धसाधनत्वादि, यदिशास्त्रं साक्षादद्वैतं प्रतिपादयतीति ब्रूमः । नचैवं, किंनाम आव-

रणभूतज्ञानमात्रं निवर्तयतीति । निवृत्तत्वावरणे अद्वैतं स्वत एव सिद्धं, तदुक्तं—सिद्धं तु निवर्तकत्वादिति । तत्राह—सिद्धत्वात्स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकमिति ॥

अस्याः टीका—व्यासयतिविरचिता मन्दारमञ्जरीत्वित्थमस्ति—सिद्धन्तुनिवर्तकत्वादितीति । ऐक्यस्य प्रकाशात्मस्वरूपत्वेन सदा प्रकाशमानत्वेऽपि शास्त्रस्यारम्भणीयत्वं सिद्धमेव, शास्त्रस्याज्ञानमात्रनिवर्तकत्वादित्यर्थः । इति दृश्यते ॥

अत्रेदमप्यवधारणीयम्—महाभाष्ये १-१-४ मुखनासिकासूत्रे "यदि तर्हि नित्याश्शब्दाः किमर्थं शास्त्रमितिचेत्—निवर्तकत्वात्सिद्धम् । वा । इति दृश्यते । आङ्स्मायविशेषेणोपादिष्टोननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते छन्दस्यचिपरतः आङोननुनासिकस्य प्रसङ्गेनुनासिकः साधुर्भवतीति मुखनासिकावचनोनुनासिकः ॥

अनेनपरामर्शेन "सिद्धं निवर्तकत्वात्" इति न्यायः सुप्रसिद्ध इति ज्ञायते । ग्रंथकाराः स्वस्वाभिमतेऽर्थे योजयन्तीत्यपि ॥

वाक्यव्याख्या ॥ वेदार्थसंग्रहे—यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत् । तथाऽप्यन्तर्गुणामेव देवतां भजते तत्रापि सगुणैव प्राप्यत इति ॥

सच्चित्तः सद्विद्यानिष्ठः इति श्रीभा ॥—

वेदा ॥२—फलसंविभत्सया हि कर्मभिरात्मानं पिप्रीषन्ति । स प्रीतोऽलं फलायेति शास्त्रमर्यादा ॥ रचनानुपपत्त्यधिकरणेऽपि श्रीभा ॥

वेदार्थसं॥ १९९ पु.—

ऋणं वा जायते इति श्रुतिर्यद्यप्यवदानस्तुतिपरं वाक्यम् । तथापि नासता स्तुतिरुपपद्यते ॥

## संप्रदायः

श्रीभगवद्रामानुजाचार्यसिद्धान्ते संप्रदायस्तु –बोधायनवृत्तिः ब्रह्मनन्दिवाक्यं तद्भाष्यं द्रमिडाचार्यप्रणीतं तदनुसारि ग्रन्थजातं सर्वं विशिष्टाद्वैतसिद्धान्तमेवव्यवस्थापयतीति ॥ तद्विशदीकरणाय श्रीभाष्योदाहृतानि वृत्तिवाक्यानि वाक्यवाक्यानि भाष्यवाक्यानि प्रबन्धनामानि च निर्दिश्यन्ते—तथा च भाष्यारम्भे "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" ॥ इति ॥

अत्र श्रुतप्रकाशिका–बोधायनेनातिविस्तीर्णा वृत्तिःकृता। द्रमिडभाष्यकारादयोऽपि हि परपक्षप्रतिक्षेपाद्यनादरेणाति संक्षिप्तान् ग्रन्थान-रचयन् । अतिविस्तीर्णातिसंकुचितग्रन्थानां साफल्यमायुष्मद्बुद्धिमज्जन-प्रचुरेषु देशकालान्तरेषु भवति । नहीदानींतनपुरुषाणां सर्वेषां शतायुष्ट्वं यावज्जीवं ग्रन्थपरिश्रमः सहजधीविशेषाश्च सन्ति । तस्मात्पर-मतनिरासार्थं अनतिविस्तरतया सुग्रहार्थं च सूत्रं व्याख्यातव्यमिति यावत् ॥ इत्यास्ति ॥

## सिद्धान्तग्रन्थक्रमः

१ शारीरकशास्त्रं ब्रह्मसूत्रम्—बादरायणाचार्यः.

२ वृत्तिः–बोधायनाचार्यः–(उपवर्ष इति नामान्तरं)–कृतकोटिः.

३ वाक्यं—ब्रह्मनन्दी टंकाचार्यः छान्दोग्यव्याख्यानम्.

४ भाष्यं वाक्यव्याख्या—द्रमिडाचार्यः,

५ विवरणं—श्रीवत्सांकमिश्रः.

६ न्यायतत्त्वं—नाथमुनिः.

७ योगरहस्यम्— ..

८ यामुनाचार्यप्रबन्धाः —८. आगमप्रामाण्यं महापुरुषनिर्णयः

संवित्सिद्धिः जीवसिद्धिः ईश्वरसिद्धिः गीतार्थसंग्रहः श्रीस्तुतिः स्तोत्ररत्नम् ॥

मानत्वं भगवन्मतस्य महतः पुंस स्तथानिर्णयः
तिस्रस्सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः ।
गीतार्थस्य च संग्रहं स्तुतियुगं श्रीश्रीशयोरित्यमून्
यद्ग्रन्थाननुसन्दधे यतिपतिः तं यामुनेयं नुमः ॥

इदं पद्यं गीताभाष्यतात्पर्यचन्द्रिकायामनुगृहीतमाचार्यैः ॥

९. श्रीभाष्यादिप्रबन्धाः भगवद्रामानुजीयाः नव ॥

वेदार्थसंग्रहो दीपः सारः श्रीभाष्यमेव च ।
नित्यं गद्यत्रयं गीताभाष्यं चेति विदुर्नव ॥

श्रीमद्वेदान्ताचार्यैरुदाहृतास्सिद्धान्तग्रन्थाः.

११ तत्त्वरत्नाकरः—भट्टपराशरपादः.
१२ न्यायसुदर्शनम्—वरदनारायणभट्टारकः
१३ प्रज्ञापरित्राणम्— ,,
१४ नीतिमाला नारायणार्यः भगवद्गीताव्याख्यातापि.
१५ मानयाथात्म्यनिर्णयः वरदविष्णुमिश्रः
१६ संगतिमाला विष्णुचित्तः.
१७ विवरणम् श्रीराममिश्रः.
१८ श्रुतप्रकाशिका श्रीभाष्यव्याख्या—सुदर्शनाचार्यः.
१९ श्रुतदीपिका— ,,
२० तात्पर्यदीपिका वेदार्थसंग्रहव्याख्या ,,
२१ तत्त्वसारः—वरदगुरुः.
२२ प्रमेयमाला ,,
२३ षडर्थसंक्षेपः श्रीराममिश्रः.

२४. वेदार्थसंग्रहव्याख्या विवरणम.

२५. प्रमेयसंग्रहः.

२६ न्यायकुलिशः वादिहंसाम्बुवाहः (आत्रेयरामानुजार्यः.)

२७ न्यायतत्त्वम्.

**श्रीमद्वेदान्ताचार्यप्रणीताः प्रबन्धास्त्विमे.**

१ तत्त्वटीका श्रीभाष्यव्याख्या असमग्रा १माधिकरणे पुराणघट्टपर्यन्ता.

२ शतदूषणी श्रीभाष्यविचारः ६६ वादाः.

३ अधिकरणसारावळिः कुमारवरदार्यव्याख्या च.

४ तत्त्वमुक्ताकलापः सर्वार्थसिद्धिव्याख्या च.

५ न्यायपरिशुद्धिः.

६ न्यायसिद्धाञ्जनम.

७ सेश्वरमीमांसा १मे २पादाः.

८ श्रीमद्रहस्यत्रयसारः

९ द्वात्रिंशद्रहस्यानि.

१० पाञ्चरात्ररक्षा.

११ सच्चरित्ररक्षा.

१२ स्तोत्ररक्षा. (चतुश्श्लोक्यधिकारः गद्याधिकारः स्तोत्राधिकारः)

१३ गीताभाष्यतात्पर्यचन्द्रिका.

१४ गीतार्थसंग्रहरक्षा.

१५ यादवाभ्युदयकाव्यम्.

१६ हंससन्देशः.

१७ संकल्पसूर्योदयनाटकम्.

१८ स्तोत्राणि अनन्तानि.

१९ द्राविडप्रबन्धाः ५०० प्रायः पद्यानि.

२० सुभाषितनीव्याद्याः इतरप्रबन्धाः.

इतरैराचार्यैः प्रणीताः प्रबन्धास्त्विमे.

दशोपनिषद्भाष्यं.-भावप्रकाशिका, मूलभावप्रकाशिका, सूत्रभावप्रकाशिका, भगवद्विषयम्—प्रभृतयः श्रीरङ्गरामानुजमुनिविरचिताः प्रबन्धाः चण्डमारुतम्, पाराशर्यविजयः वेदान्तविजयप्रभृतयः महाचार्यविरचिताः प्रबन्धाः ॥ तत्त्वमार्ताण्डप्रभृतयः सुरपुरश्रीनिवासाचार्यविरचिताः प्रबन्धाः ॥

एवं बहुभिराचार्यैः प्रबन्धरूपेणोपदेशरूपेण च कृतेनोपकारेण विशिष्टाद्वैतसिद्धान्तप्रक्रियेत्थं प्रचरतीति सर्वं भद्रम्.

विशिष्टाद्वैतसिद्धान्तप्रक्रियेत्थं प्रकाशिता ।
विद्वच्छात्रकृते लक्ष्मीश्रीनिवासविपश्चिता ॥

लक्ष्मीपुरं श्रीनिवासाचार्यः.

# कुट्टाकारशिरोमणिः.

(अनुवृत्तः)

---

ननु, अत्र स्थापयेदिति नोक्तं। तत्कथम्। एवमत्रोच्यते। मतिगुणमिति कर्मणः श्रवणादत्र सकर्मकं किञ्चित्क्रियापदमिति ज्ञाप्यते। तत्र स्थापयेदित्यनवद्यम्। अग्रान्तरं। अग्रयोरन्तरमग्रान्तरम्। उद्दिष्टाभ्यां भागहाराभ्यां भाज्यराशौ पृथक्पृथग्विभक्ते ये शिष्येते, तयोर्विवरमिति यावत्। तस्मिन्निक्षिप्त निहितं कार्यम्। अत्र मतिगुणितं प्रकृतं। तस्मान्मतिगुणितमत्राग्रान्तरं निधेयमिति। अत्रेतदनुसंधेयं। यदत्र मतिगुणितमग्रान्तरे क्षिप्तं च तत्स्थाधःस्थितेनान्येन विभज्य लब्धं फलं मतेरधस्तान्निदध्यादिति। एतच्च मतिगुणमित्यादिना सूचितं सूत्रकृतेत्यवगन्तव्यम्। अध उपरि गुणितम्। अत्र अधशब्देनोपर्यधोभावेन विन्यासेषु समितिषु फलपदेषु, मत्यादिकमुपान्त्यमुच्यते। उपरि शब्देनोपान्त्यस्योर्ध्वपङ्क्तिस्थं। गुणशब्देन गुणत्वं। तस्मादुपान्त्यस्य तदुपरिफलस्यचान्योन्यगुणनं कार्यम्। एतदुक्तं भवति। मत्यादिकेनोपान्त्येन तदुपरिफलं गुणयेदिति। ननु चात्र मुख्यवृत्त्या सर्वाधःस्थितस्यान्त्यस्य फलस्य वाचकोऽधःशब्दः कथमुपान्त्यमाह। अत्रोच्यते। अन्त्ययुगित्यस्य विषयाभावात्। अन्त्ययुक् उपान्त्येन गुणितं तदुपरिफलमत्र प्रकृतं। तदन्त्ययुक्तं कार्यम्। एवं तावत्कार्यं। यावद्द्वावेव राशी भवतः। राशिद्वयमात्रे तु 'अध उपरि गुणित' मित्येतन्न प्रवर्तते। तस्मादत्राधो राशिना प्रयोजनं नास्तीति संत्याज्यः। ऊनाग्रच्छेदभाजिते, छेदो भागाहारः "भाग-

हारो हरो हारो हारकश्छेदभाजकौ" इति गोविन्दभट्टसोमसुत् । अत्रोपरिराशिः प्रकृतः । तस्मिन्सतिसम्भवे पूर्वोक्तेनोनाग्रभागहारेण भक्ते सति शेषं, यच्छिष्टं तत् । अत्रैतदनुसंधेयं । यत्रोनाग्रच्छेदभाजितेशेषमित्यत्र शेषं नास्ति, तत्रोनाग्रच्छेदमात्रं निधेयमिति । 'अधिकाग्रच्छेद्गुणं' । पूर्वोक्तेनाधिकाग्रभागहारेण गुणितम् । अधिकाग्रयुतम्' । अत्राप्यग्रशब्दः शेषवचनः । अधिकं चैतदग्रं च अधिकाग्रं । तेन युक्तं द्विच्छेदाग्रम् । इहाप्यग्रशब्दः शेषवचनः । द्वौ छेदौ द्विच्छेदौ अत्राष्टादशपुराणानामितिवचनइव संख्यावाचिना द्विशब्देन छेदौ विशेष्येते इति विशेषणसमासः द्विच्छेदौ तयोरग्रे च यस्य स्त इति मत्वर्थीयोऽच्प्रत्ययः । द्विच्छेदाग्रवद्भाज्यराश्यन्तरं भवतीत्यर्थः । अयं भाज्यराशिः प्रथमः । अत उत्तरेषामपरिमितानां भाज्यराशीनामानयनप्रकारः प्रदर्श्यते । तद्यथा । 'अधिकाग्र भागहारमि' त्येतदादिना 'ऊनाग्रच्छेदभाजिते शेषमि' त्यन्तेन गणितेन यन्निष्पद्यते तद्ध्रुवं । तत्रैकगुणितमूनाग्रभागहारं निक्षिप्य तदधिकाग्रभागहारेण गुणयित्वा तत्राधिकाग्रं युञ्ज्यात् । ततस्तादृशः कश्चिद्भाज्यराशिर्भवति । ध्रुवे द्विगुणितमूनाग्रभागहारं दत्वा तदधिकाग्रभागहारेण हत्वा तत्राधिकमग्रं निदध्यात् । ततस्तदपरः कश्चित्तादृशो भाज्यराशिर्भवति । एवं त्र्यादिगुणितमूनाग्रभागहारं ध्रुवे निक्षिप्योक्तप्रक्रियया भाज्यराशिसहस्रमानयेत् । अथात्र केषुचित्प्रश्नविशेषेषु मत्यन्तराण्याङ्गीकृत्योक्तध्रुवाणि कृत्वा तद्वशेनाप्युक्तप्रक्रिययाऽपरिमितान् भाज्यराशीन् आनयेत् । अत्रैतदनुसंधेयं । यत्रोनाग्रभागहारेणाधिकाग्रभागहारश्शुद्ध्यति तत्राधिकाग्रयुक्तोऽधिकाग्रभागहारः प्रथमो भाज्यराशिर्भवति । तत्रैकादीष्टसंख्यागुणितोऽग्रभागहारः स्वाग्रयुक्तस्तदनन्तरादिस्तद्वशे

भाज्यराशिर्भवतीति । इहैतदप्यनुसंधेयं । शेषपरम्परभक्तमित्यत्र यत्र फलपङ्क्तिरेका भवति तदा शेषयोरप्येकः शुद्ध्यति । यत्र च फलपङ्क्ती द्वे भवतः तदा शेषयोश्चैकश्शुद्ध्यति । तत्रोभयत्र प्रथमत एव प्रत्यासन्नां मतिं कल्पयित्वा तयाधिकाग्रभागहारं हत्वा तत्राधिकमग्रमर्पयेत् । एवं कृते प्रथमो भाज्यराशिर्भवति । अत्र प्रथमत एव कल्पितां प्रत्यासन्नां मतिमेकादीष्टसंख्यागुणितानाग्रभागहारयुक्तां कृत्वाधिकाग्रभागहारेण हत्वा तत्राधिकमग्रं च दत्वा तदपरान् भाज्यराशीनानयेत् । अत्रापि केषु चित्प्रश्नविशेषेषु प्रथमत एव मत्यन्तराण्युररीकृत्य तद्वशादनन्तरोक्तप्रक्रिययान्यान्यपि भाज्यराशीनानयेदिति । एतानि सर्वाणि परे विशेषाश्च क्रमेणोदाहरणमुखेन स्पष्टीक्रियन्ते ।

उद्देशकः—" अष्टादशभिरेकाग्रो
यो भवेद्राशिरुद्धृतः ।
एकोनत्रिंशता चाप्तः
सप्ताग्रस्तंसुधीर्वद " ॥ १ ॥

अत्राधिकाग्रभागहार एकोनत्रिंशत् (२९) अस्मिन्नूनाग्रभागहारेणाष्टादशकेन (१८) छिन्ने, शिष्टराश्योरुपरिराशिरेकादशसंख्यः (११) अधोराशिरष्टादशसंख्यः (१८)। एतावुपर्यधोभावेन स्थापितौ $\begin{matrix}११\\१८\end{matrix}$ । अथोपरिराशिनैकादशकेन (११) स्वाधोराशावष्टादशके (१८) विभक्ते लब्धमेकं (१) ततस्तच्छेषेण सप्तकेन (७) स्वोपरिराशावेकादशके (११) भक्ते लब्धमेकम् (१)। इदं पूर्वफलस्याधो निहितं । तच्छेषेण चतुष्केण (४) स्वाधोराशौ सप्तके (७) विभक्ते लब्धमेकम् (१) इदं पूर्वफलयोरधो दत्तं $\begin{matrix}१\\१\\१\end{matrix}$ । ततस्तच्छेषेण त्रिकेण

स्वोपरिराशौ चतुष्के (४) विभक्ते लब्धमेकम् (१) । एतत्पूर्वफलानामधो विन्यस्तं

१
१
१
१

। इत्थं चतस्रः फलपङ्क्तयः । शेषयोरुपर्येकम् (१) । अधस्त्रीणि

१
३

। अग्रान्तरं षट्कम् ६ । अत्रयुग्माः फलपङ्क्तयः । शेषावपि लघूकृताविति मतिः कल्प्यते । अयं रूपात्मक उपरिराशिः कया संख्यया गुणितः षट्कमितेनाग्रान्तरेण युक्तश्च, स्वाधोराशिना त्रिकेण शुद्ध्यतीति लब्धा प्रत्यासन्ना मतिस्त्रिसंख्याका (३)। एषां चतुर्णां पूर्वेषां फलानामधो निहिता

१
१
१
१
३

। अथोपरिराशौ मतिगुणितेऽग्रान्तरेण च युक्ते नवकं (९) जातम् । अस्मिन् स्वाधोराशिना त्रिकेण हृते लब्धं त्रयम् (३)। एतन्मतेरधस्ताद्दत्तम्

१
१
१
१
३
३

। एषा फलवल्लीत्युच्यते । अथैतेषु समतिषूपान्त्येन मतिसंज्ञकेन त्रिकेण गुणेन गुणिते रूपात्मके तदुपरिफलेऽन्त्येन त्रिकेण च ॥

(अनुवर्तते)

क. शेषाचार्यः

# वालिवधन्यायदृढमञ्जूषा.

वन्दे चतुर्भुजं ज्योतिर्गणानामधिपं शिवम् ।
शंभुवागीशविष्ण्वादिसेव्यं तद्गिरिशप्रियम् ॥

योऽभूत्सूर्यकुलावतंसपदभाक् पादाम्बरेणोर्वशा-
दश्मानं कुरुते स्म यः स्त्रियमगाज्ज्ञायानुजाभ्यां वनम् ।
यस्यासीत्कपिसैन्यमेव समरे रक्षोविनाशक्षमं
तं रामं जनकात्मजाप्रियमहं ध्यायामि नित्यं मुदा ॥

श्रीरामं जगदेकवीरमनघं वेदैरशेषैः स्तुतं
सीतालक्ष्मणवायुसूनुकपिराडाद्यैः सदा सेवितम् ।
योगिध्येयमचिन्त्यवैभवयुतं सर्वेष्टदं तारकम्
सत्यं ज्ञानमनन्तमद्वयमहं ब्रह्मेति गम्यं भजे ॥

रामेण वालिहननं कृतं न्याय्यमुतान्यथा ।
इत्येवं द्वापरे प्राप्ते न्याय्यमेवेतिवर्ण्यते ॥

रामेण वालिहननं शरणागतरक्षणम् ।
प्रतिज्ञाया निर्वहणं वैदेह्याः परिमार्गणम् ॥

स्वधर्मरक्षणं चेति चत्वारो हेतवो मताः ।
ते क्रमाद्दर्शयिष्यंते श्रीरामकृपया मुदा ॥

तत्रोच्यते कपिवरं सुग्रीवं शरणागतम् ।
रक्षितुं निहतो वाली रामेण विदितात्मना ॥

तथाहि—

" सकृदेव प्रपन्नाय तवास्मीति च याचके ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम " ॥

(श्रीमद्रामायणे ६।१८।३३) इति भयहेतुतया शंकितेभ्यः सर्वभूतेभ्यः सकाशात् सकृदेकयैव वृत्त्या प्रतिपत्तिमते, तत्त्वमस्यादिमहावाक्यार्थ-ज्ञानजन्या " ज्ञानी त्वात्मैव केवलम् " इति भगवदुक्ता याऽत्मरूपा प्रतिपत्तिस्तद्वते ।

यद्वा—

" अनन्याश्चिंतयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् " ॥

इति ॥ मदुक्तरीत्या " तवास्मीति याचते " तवाहं सेवकस्त्वं सेव्यः तवाहं रक्ष्यस्त्वं रक्षक इत्येवमुपासनां कुर्वतेऽन्यस्माद्यस्मात्कस्माच्च सर्वथा भयं न भवेत्तथा करिष्ये (करिष्यामि) इत्येवं परित्यागानर्हः नियमः । स च धर्मिष्ठः यशस्यः स्वर्ग्यः फलप्रदानसमये रक्षितुः । तदुक्तं—

" धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये "

इति (तत्रैव ६—३३—३२)

इति प्रतिज्ञानुरोधाच्छरणागतस्य सुग्रीवस्य रक्षणमत्यावश्यकम् । तच्च सुग्रीवस्य प्रबलशत्रोर्वालिनो निर्मूलनेन विना (स्वमित्रस्य) सुग्रीवस्य रक्षणं दुश्शकमिति श्रीरामेण वाली हत इति न्याय्यमिति चेत् अत्र केचित्—नैतन्न्याय्यम्—

श्रीरामेण शरणागतस्य सुग्रीवस्य रक्षणं कार्यं वा—महतः बलीयसः वानराधिपतेः किष्किन्धाधिपस्य वालिनः स्वेनाविरोधिनः हननं कार्यं वेति विचार्य वालिनस्तद्द्रोहित्वेऽपि मद्द्रोहित्वाभावात्तद्धननं न न्याय्यमिति निश्चेतुं शक्यत्वेपि तथा विचाराकरणान्न न्याय्यमिति समादधुः ।

तन्न धार्मिकोक्तिः स्यात् । तथा हि—

"धिक्तस्य जीवितं पुंसः शरणार्थिनमातुरम्
यो नार्तमनुगृह्णाति वैरिपक्षमपि ध्रुवम् ।
यज्ञदानतपांसीह परत्र च न भूतये
भवंति तस्य यस्यार्तपरित्राणे न मानसम् ॥

इति मार्कण्डेयपुराणे

"लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम्,
ब्रह्महत्यासमं पापमाहुस्तस्य मनीषिणः ।
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि
शरणागतहंतॄणां न दृष्टा निष्कृतिः क्वचित् ॥
मरुतामपि यज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥ इति

तथा—

वध्यमानं प्राणिनं हि यः शक्तः समुपेक्षते ।
स याति नरकं घोरमितिप्राहुर्मनीषिणः ॥
चतुस्सागरपर्यन्तां यो दद्यात्पृथिवीमिमाम् ।
सत्त्वेभ्यो ह्यभयं यश्च तयोरभयदोऽधिकः ॥"

इति भारते च व्यासेन

"बद्धांजलिपुटं दीनं याचंतं शरणागतम् ।
न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥
आर्तो वा यदि वा दृप्तः (त्रस्तः) परेषां शरणं गतः ।
अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ।
स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति,
स्वया शक्त्या यथान्यायं (सक्तं) तत्पापं लोकगर्हितम् ॥

विनष्टः पश्यतस्तस्यारक्षिणः शरणं गतः ।
आदाय सुकृतं सर्वं तदा गच्छेदरक्षितः ।
एवं दोषो महानत्र प्रपन्नानामरक्षणे ॥
अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ।
करिष्यामि यतार्थं तु कंडोर्वचनमुत्तमम् ॥"

इति (श्रीमद्रामायणे ६। १८। २७–३२) श्रीरामेण च लाकात्वात् शरणागतःशत्रुरन्यो वा स्वयं शक्तः सन् न ररक्षेति लोकापवादपरिहारार्थं दयया वा स्वप्राणपरित्यागेनापि रक्षणीय एव। अन्यथा स्वकृतानि यज्ञदानतपांसि विफलानि स्युः। अस्य पापस्य निष्कृतेर्धर्मशास्त्रेष्वनुक्तेः चिरं घोरनरकपातेन बहुदुःखान्यनुभवितव्यानि स्युः। लोभात्कामाद्द्वेषान्मोहाद्भयाद्वा शरणागतरक्षणस्याकरणे विनष्टः शरण्यः अस्य सर्वं पुण्यं गृहीत्वा गच्छेत्। तद्रक्षणे तु समस्ताखण्डभूमण्डलदानफलादभयदाताऽधिकं क्षयरहितं फलं प्राप्नोति। तस्माच्छरणागतरक्षणं स्वसामर्थ्यानुगुण्येन कार्यमेव न तु तन्निमित्तं भयमुत्प्रेक्ष्य कार्यान्तरपारवश्याद्विस्मृतिं प्राप्य तेन स्वेप्सितार्थादाना (र्थस्यादत्तत्वेन) तु औदासीन्यमाश्रित्य स दुःखमनुभवत्विति पर्यालोच्य वा स त्याज्यः इति युद्धरङ्गे शरणागतं विभीषणं दृष्ट्वा यं शरणागतत्वेन शत्रोः रावणस्य भ्रातापि न हंतव्यः किं तु रक्षणीय एव इतिवत् अयं सुग्रीवः शरणागतत्वेन रक्षणीय एवेति रामोक्त्या त्वदुक्तो न्यायो न धर्मशास्त्रसम्मतः प्रत्युत विरुद्धश्च।

अत एव—

"ते च विप्रसहस्रस्य गोसहस्रमलंकृतम् ।
हेमधेनुधरादीनां दातारः सुलभा भुवि ॥
दुर्लभः पुरुषो लोके सर्वभूताभयप्रदः" ।

इति (अग्निपुराणे) उक्तम् ।

अन्यच्च श्रीमद्रामायणे (६।१८।२४-२५)

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमंत्रितः ॥
स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ।
कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः " ॥ इति

स्वभार्याहर्तृत्वेन शत्रुरपि तं स्वावासवृक्षसमीपमागतं किरातं तिर्यक्त्वाच्छास्त्रानधिकारी स्वभावतः मन्दबुद्धिः पक्षिजातिरपि जन्मान्तरीयपुण्यपरिपाकेन कपोतः बहिः कतिचिदाहारानानीय स्वकीयद्रव्यान्तराणि तथा कतिपयान् स्वशरीरैकदेशानदत्वा नोपचचार किं तु अज्ञैरात्मत्वेनाभिमन्यमानैः प्राज्ञैरप्याद्यं धर्मसाधनमित्यादरणीयैः स्वशरीरमांसै भोजनार्थं निमन्त्र्य उपचरितो नोपेक्षित इत्यर्थस्य वेत्ता लोकरक्षणदीक्षितः वसिष्ठविश्वामित्रादिशिष्यः " रामो विग्रहवान् धर्मः " इति प्रसिद्धः सकलधर्मशास्त्राद्यधिकारी सकलधर्मरहस्यवेत्ता सकलधर्मानुष्ठाता च मादृशः जनः अयमेव शरण्य इति प्राप्तं पुरुषं प्रतिगृह्णीयादिति किमुतेति सुग्रीवं प्रति रामेणोक्तं संगच्छते इति सिद्धान्तिन आहुः ॥

अहो किमेवं शरणागतस्य सुग्रीवस्य रक्षणाय वाली हत इत्युच्यते तदिदं प्रमाणशून्यं बहुप्रमाणविरुद्धं चेति मैवं वादीः । तथा हि । सुग्रीवः रामं न शरणमापत् किं तु रामः सुग्रीवं शरणमापत् ॥

" परिमृष्टो दशांतेन दशाभागेन सेव्यते ।
दशा भागगतो हीनस्त्वं हि रामः सलक्ष्मणः ॥
यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ।
तदवश्यं त्वया कार्यं ससुहृत्सुहृदांवर ॥

अकृत्वा न हि संसिद्धिमहं पश्यामि चिंतयन् ।
श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ॥
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ।
ऋश्यमूके गिरिवरे पंपापर्यंतशोभिते ॥
निवसत्यात्मवान् वीरश्चतुर्भिः सह वानरैः ।
वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः ॥
सत्यसन्धो विनीतश्च धृतिमान्मतिमान्महान् ।
दक्षः प्रगल्भो द्युतिमान् महाबलपराक्रमः ॥
भ्रात्रा विवासितो वीर राज्यहेतोर्महात्मना ।
स ते सहायो मित्रं च सीतायाः परिमार्गणे ॥
भविष्यति हि ते राम मा च शोके मनः कृथाः" इत्युक्त्वा—
तथा—"गच्छ शीघ्रमितो वीर सुग्रीवं तं महाबलं ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव" ॥ इत्याद्युक्त्वा—
"कुरु राघव सत्येन वयस्यं वनचारिणम् ।
स हि स्थानानि कार्त्स्न्येन सर्वाणि कपिकुञ्जरः ॥
नरमांसाशिनां लोके नैपुण्यादधिगच्छति ।
न तस्याविदितं लोके किंचिदस्ति हि राघव ॥
यावत्सूर्यः प्रतपति सहस्रांशुः परंतप ।
स नदीर्विपुलान् शैलान् गिरिदुर्गाणि कन्दरान् ॥
अन्विष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ।
वानरांश्च महाकायान् प्रेषयिष्यति राघव ।
दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ।
अन्विष्यति वरारोहां मैथिलीं रावणालये" ॥ इति—

(श्रीमद्रामायणे ३ । ७२ । ९–२६) हे राम त्वं लक्ष्मणेन सह दारप्रधर्षणेन (व्यसनेनेत्यर्थः) दुर्दशापरिपाकवशाधीनः तन्निवृत्तये सुहृत्सम्पादनमावश्यकमेव । तेन विना तद्व्यसननिवर्तकसीताप्राप्ति- रसम्भावितैव । तत्र योग्यः सुहृच्च नानागुणोपपन्नः सुग्रीवो नाम वानरः ऋश्यमूके गिरिवरे चतुर्भिर्मन्त्रिभिः वानरैः सह तिष्ठति यः स एव मित्रं भूत्वा सीतापरिमार्गणादिकार्ये ते सहायः स्यात् तेन सहेतो गत्वा शपथपूर्वं मैत्री कुरु । स सर्वाणि स्थानानि जानाति तस्याविदितं स्थानं किञ्चिदपि नास्ति । स बहुवानर- सैन्याधिपश्च । इत्यादितेःपुत्रस्य रामसाहाय्येन राक्षसभावाद्विमुक्तस्य कबन्धस्य वचनं श्रुत्वा तदुक्तमार्गेणागत्य ऋश्यमूकं गिरिवरं प्राप्य तदुक्त्यनुसारेणाग्निसाक्षिकं तेन सह तत्र मैत्रीमेवाकरोत् । तदुक्तं श्रीमद्रामायणे १।१।६० ॥

"सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ।
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम्" ॥

इति स्वसमानदुःखप्रबलस्नेहलाभेन प्रीतः अग्निसाक्षिकं रामेण सुग्रीवः मैत्रीमकरोत् । अनेन तुल्यवित्तिवेद्यन्यायात्सुग्रीवेण रामोऽपि मैत्रीमक- रोदिति सिद्धम् । अत एव "त्वं वयस्योऽसि हृद्यो मे" इति (श्रीमद्रामायणे ४।५।१७) श्रीरामेण वयस्यशब्देनैव सुग्रीवेण कृतः व्यवहारः । अत एव—

"सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव कांक्षमाणस्य ममांतिकमुपागतः ॥
तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।" इत्याद्युपक्रमे—
"नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ।
नासामविदुषः शक्यमेवं विभाषितुम् ॥

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहुव्याहरतानेन न किंचिदपशब्दितम् " ॥

(श्रीमद्रामायणे ४। ३। २६–२९) महात्मानं कपीन्द्रं कांक्षमाणेन मया वेदवेदांगवित्तत्सचिवः मारुतिरुपलब्धः । तेन सह तदीयेन मया सह भाषणार्थं प्रेषितेन मदीयस्त्वं भाषणं कुर्विंत्येवं रामोक्तौ तत्प्रशंसनंपूर्वकं मया कांक्षमाण इत्युक्तिः संगच्छते । एवं च श्रीरामं सुग्रीवः शरणमापदित्यर्थस्त्वदुक्तो न सिध्यति ॥

किंच—" अहं चैव स रामश्च सुग्रीवं शरणं गतौ ।
एष दत्वा च वित्तानि प्राप्य चानुत्तमं यशः ॥
लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥
सीता यस्य स्नुषा चासींच्छरण्यो धर्मवत्सलः ।
तस्य पुत्रः शरण्यस्य सुग्रीवं शरणं गतः ॥
सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा ।
गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः
यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः ।
स रामो वानरेन्द्रस्य प्रसादमभिकांक्षते ॥
येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः ।
मानिताः सततं राज्ञा सदा दशरथेन वै ॥
कस्यायं पूर्वजःपुत्रः त्रिषु लोकेषु विश्रुतः ।
सुग्रीवं वानरेन्द्रं तु रामः शरणमागतः ॥"

इति (श्रीमद्रामायणे ४।४।१७—२३)" हनूमन्तं प्रति लक्ष्मणस्य" भाषणेषु ।

तथा—"तपसा सत्यवाक्येन वसुधा येन पालिता ।
स्त्रीहेतोस्तस्य पुत्रोऽयं रामोऽरण्यं समागतः ॥

तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः ।

रावणेन हृता भार्या स त्वां शरणमागतः ॥" इति—

(श्रीमद्रामायणे ४।५।५-६) सुग्रीवं प्रति हनुमतः भाषणेषु च "रामः सुग्रीवं शरणं गतः" इति "सुग्रीवं नाथं (स्वामिनम्) इच्छतीति" "सुग्रीवस्य प्रसादमभिकांक्षते" इति रामस्यैव सुग्रीवं प्रति शरणागतत्वादिकमुच्यते न तु रामं प्रति सुग्रीवस्येति स्पष्टमेव ।

किं च—"भवान्धर्मविनीतश्च सुतपाः (विक्रान्तः) सर्ववत्सलः ।

आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥

तन्ममैवैष सत्कारो लाभश्चैवोत्तमःप्रभो ।

यत्त्वमिच्छसि सौहार्दं वानरेण मया सह" ॥

इति रामं प्रशस्य अग्रे—

"रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।

गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा" ॥

इति (श्रीमद्रामायणे ४।५।९–११) रामे समक्षमागतेऽपि स्वभार्यायाः तारायाः किष्किन्धाराज्यस्य च प्राप्तये त्वामहं शरणं गत इत्यनुक्त्वा तव मया सह सुहृत्त्वेच्छा ममोत्तमलाभकरी यद्यपि तथापि यदि मया सह सख्येच्छा तदा परस्परमानुकूल्यस्यावश्यकतया परस्परं पाणिग्रहणपूर्वकमनुल्लङ्घनीया व्यवस्था कार्येत्युक्त्या सुग्रीवस्य रामं प्रति शरणागतत्वं न प्रतीयते । एवं च सीतावियोगात्कामबाणसंतप्तहृदयेन अत एव विक्षिप्तचित्तेन "न देशकालौ हि यथार्थधर्मौ अवेक्षते कामरतिर्मनुष्यः" इति (श्रीमद्रामायणे४।३३।५५) उक्तरीत्या कालदेशधर्माणामविचारात् कृत्याकृत्यविवेकशून्येन स्वकार्यसाधनातुरेण रामेण वाली निहतः न तु शरणागतसुग्रीवरक्षणाय स हतः इत्यन्ये ।

तदपरे न क्षमन्ते नैतत्साधु मन्यन्ते च। श्रीरामं प्रति सुग्रीवस्य शरणागतत्वात्। श्रीरामस्य तं प्रति तत्त्वाभावाच्च। तथा हि ॥

"स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः।
भित्वा सालान् गिरिप्रस्थे सप्त भूमिं विवेश ह" ॥

"निष्पत्य च पुनस्तूर्णं स्वतूणीं प्रविवेश ह।
तान् दृष्ट्वा सप्त निर्भिन्नान् सालान्वानरपुंगवः" ॥

"स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतभूषणः।
सुग्रीवः परमप्रीतः राघवाय कृतांजलिः" ॥

इति (श्रीमद्रामायणे ४।१२।६) वचनेन सुग्रीव एव शरणं गतः श्रीरामं नतु सुग्रीवं श्रीराम इति स्पष्टमुक्तेः।

(अनुवर्तते)

का. शेषवेंकटाचलशास्त्री.

# भूमिका.

---

सत्स्वपि बहुषु ग्रन्थेषु न हि दृश्यते बालानां दिनचर्यादिबोधकः कश्चिदपि सरलो नीतिप्रबन्धः तदहमखिलबालोपयुक्तां सूक्तिमञ्जरीं नाम कांचित् कृतिमादौ कर्णाटभाषया पद्यरूपतः प्राणैषि ।

सा च कृतिः बहुभिरभिनन्दिता पुरा कदाचिदेतद्देशीयप्राथमिककर्णाटभाषापरीक्षायां पठनीयतया निर्णीता, श्रीमत्कर्णाटदेशाधीश्वरम्यास्मन्महाप्रभोः श्रीकृष्णराजेन्द्रमहीपतेः कटाक्षपदवीं कदाचिदारुह्य बहुमानिता च विजयते ॥

सैव गैर्वाण्यां वाण्यां व्युत्पित्सूनामपि बालानां उपयोगाय बहुभ्यो वत्सरेभ्यः प्रागेव संस्कृतभाषया परिवर्तिता यद्यपि मुद्रिता चान्ध्राक्षरैः तथाप्यद्य विशेषतः प्रचारमाशासानेन मया बहुजनविदितैः देवनागराक्षरैः मुद्रापिता कृतिरियमल्पापि गुणैकप्रवणैः महाशयैर्विद्वद्भिस्सादरमवलोकिष्यमाणा, इतश्च विशेषतो बालोपयुक्तेति यदि मंस्यते तत्सफलो भविता मदीय एतद्रचनपरिश्रम इति सप्रश्रयमभ्यर्थये ॥

इति

विज्ञापयति ग्रन्थकर्ता,

मैसूरु सीतारामशास्त्री.

# संस्कृत सूक्तिमञ्जरी

यस्याः कारुण्यलेशेन मूढोऽपि प्रौढतां व्रजेत् ।
वात्सल्यतो गिरां देवी वत्सेभ्यस्सा प्रसीदतु ॥ १

प्रत्यहं सकलैर्बालैः कार्यं कर्म यथाक्रमम् ।
काश्चिद्ब्रवीमि नीतीश्च सुबोधश्लोकरूपतः ॥ २

पूर्वस्यां दिशि याव-
द्रविरुदयति तावदेव भो बाल ।
देवस्य नाम गायन्
रक्षितु रुत्तिष्ठ शय्यातः ॥ ३

प्रक्षालय करचरणं
तत्क्षणममलेन वारिणा जिह्वाम् ।
संघर्षयाङ्गुलीभ्यां
विशदय दन्तान् विधेहि गण्डूषान् ॥ ४

क्षालय मुखं ततः कर-
चरणमनार्द्रेण हस्तवस्त्रेण ।
परिमार्जय निटिलतटे
निजमतविधिना निधेहि सच्चिह्नम् ॥ ५

अगणितमहिमविभूषित-
कृतजगदुद्धार सर्वज्ञ ।
इति भगवन्तं बहुधा
स्तुहि तद्गुणमालिकां स्मरन् भक्त्या ॥ ६

इह परदैवतमपरं
    नैवास्त्यावन्तरेण लोके नः ।
इति जानन् भक्तियुतो
    मातापितरौ कुमार वन्दस्व ॥ ७
गतदिनपठितमशेषं
    परिचिन्तय सावधानचित्तस्सन् ।
आगामिनमपि पाठं ।
    प्रागेव सकृद्विलोकय प्रीत्या ॥ ८
उचितं धायर वेषं
    गृहाण तव पुस्तकानि पाठ्यानि ।
प्रागेव कलशकाला-
    द्विद्याशालां सहर्षमुपयाहि ॥
उपयाय पाठशालां
    भक्त्या गुरवे प्रणाममारचय ।
प्राप्य तदीयामाज्ञां
    परिपठितुमुपक्रमस्व ते स्थाने ॥ १०
पृच्छति गुरौ भवन्तं
    सत्वरमालोच्य तद्बुद्ध्या ।
उत्तरमुदीरयोचित
    मुत्थायोच्चस्वरेण मुख्यकम् ॥ ११
तस्मिन् गुरौ त्वदर्थं
    किमपि नवीनं विबोधयति ।
शृणु तत्र दत्तकर्णः
    पुस्तकमवलोकयावधानेन ॥ १२

विनयावनम्रशीर्षः
सन्निधिमुपसृत्य साधु विज्ञाप्यम् ।
विज्ञापय गुरवे त्वं
तत्प्रतिकूलं कदापि मा वादीः ॥
भो वत्स जातुचित्त्वं
मा कुरु सहपाठिभिः कलहम् ।
तैस्सह पुषाण सख्यं
स्थानान्मागा बहिर्मृषाव्याजैः ॥
कलय कालमशेषं
मुदितोऽपगमय्य पाठशालायाम् ।
द्रुतमभ्येहि निजालय-
मपहाय क्रीडनादिलौल्यम् ॥
वस्त्राणि पुस्तकानि च
समुचितदेशे निधेहि कुत्रापि ।
स्वेदादिकं यथाऽर्भक
वपुषि विनश्येत्तथा स्नाहि ॥
पूतेन वाससाऽङ्गं
परिमार्जय शुद्धमम्बरं धेहि ॥
विहितं निटिले चिह्नं
धर साधु विधेहि नित्यकर्माणि ॥
विविधस्य पापराशेः
स्थानस्य गतिस्त्वमेको मे ।
शरणागतपरिपालक
परमदयाब्धे प्रसीद भो देव ॥

कृत्याकृत्यविभेदं
नाहं जानामि बालभावेन ।
भवतः पदपङ्कजयोः
भक्तिं प्रतिपाद्य पाहि मां कृपया ॥ १९

सञ्चरित सच्चिदात्मन्
नित्यं कुर्वे परश्शतान् मन्तून् ।
एष मदङ्घ्रिश्रित इति
तुष्यन्नजुगुप्सितः क्षमस्व विभो ॥ २०

इत्येवं जगदीशं
नावं नावं मुदा तदङ्घ्रियुगम् ।
नामं नाममजस्रं
पात्रीभव तत्प्रसादस्य ॥ २१

अम्ब प्रथममिदानीं
परिवेष्यं मह्यमेकस्मै ।
इति माकुरु निर्बन्धं
जनकभ्रात्रादिभिर्मुदा भुङ्क्ष्व ॥ २२

परिवेषणसमयेऽम्बां
तदेव परिवेषणीयमविलम्बम् ।
मास्त्विदमपनय धिक् धिक्
व्रजेति रुषः कदापि माजल्पीः ॥ २३

ननु परिवेषितमन्नं
मात्यज बहुळं कदाचिदपि ।
जगदन्नतो हि जीव-
त्यन्नं ब्रह्मेत्युदीर्यते श्रुत्या ॥ २४

सानन्दं भुक्त्वाऽथो
 क्षाळय वक्त्रं करावङ्घ्री ।
चर कतिपयान्निमेषा-
 नधिगृहमलस्यमुत्सृज्य ॥
उपरितनपङ्क्तिवर्ण-
 स्वरूपमालोकमालोकम् ।
लिख कठिनीमङ्गुलिभिः
 सुष्ठु गृहीत्वाऽक्षराणि रम्याणि ॥
मापत्रं छिन्धि वृथा
 माकिर भूमौ मषीबिन्दून् ।
माभिन्धि लेखनीमपि
 मागच्छान्यत्र लेखनावसरे ॥
वत्स दृढीकुरु भवता
 प्रातः पठितानि पाठशालायाम् ।
गुरुणोपदिष्टमर्थं
 सकलं सम्यग्विमृश्य जानीहि ॥
तव चिन्तनवेळायां
 यदि विस्मृतिरापतेत्क्वापि ।
पितरं भ्रातरमार्यं
 सादरमितरं च वा पृच्छ ॥
मानिर्बन्धान खाद्यं
 देहीत्यम्बां ददाति यद्यस्ति ।
यावद्ददाति ताव-
 त्सादरमादाय तृप्य खादित्वा ॥

नमु वत्स पाठशालां
याह्यविलम्बं मुदाऽपराह्णेऽपि ।
आनियतपाठकालं
तत्रैवास्स्वाथ गेहमायाहि ॥ ३१

सद्मन उपान्तभूमौ
अनधिकदूरे प्रदेशे वा ।
सद्भिर्बालैस्साकं
कञ्चित्कालं मुदा क्रीड ॥ ३२

रक्तं शुद्ध्यति शक्तिः
पुष्यति विकसत्यतीव बुद्धिश्च ।
तस्मादाघटिकार्धं
युक्त्या व्यायाममारचय ॥ ३३

यावद्रविरस्तमियात्
निजगृहमुपयाहि तावदेव त्वम् ।
संक्षालितकरचरणो
धृतशुचिवसनो भज प्रियं देवम् ॥ ३४

उत्तिष्ठ भोक्तुमेही-
त्यर्भकमात्रा समाहूतः ।
भुक्त्वाऽनधिक्षिप्तस्ता-
मथ पठ पठितान्यनालस्यः ॥ ३५

जगदिदमखिलं कृपया
संरक्षन्तं परं देवम् ।
ध्यायन् निजान्तरङ्गे
शय्यामधिशेष्व सानन्दम् ॥ ३६

अनधीयानो व्यर्थं
नह्यालस्यादिना नयेत्कालम् ।
बाल्ये यदिनाधीते
बालक लभ्येत किं ततो विद्या ॥ ३७

शृणु गुरुजनः कदापि च
न व्याहरति ह्यनात्मनीनं ते ।
तस्मादतिदुष्करमपि
शिरसा वह शासनं तस्य ॥ ३८

धनिकस्याहं सुत इति
दृप्तोऽन्यान् मावमन्येथाः ।
धनिनोमहांस्तुविनयः
परमं खलु भूषणं जगति ॥ ३९

गळमधिरोहत्वसवः
बहुधनलाभोऽथवा तेऽस्तु ।
निन्दतु नन्दतु वाऽन्यः
मैव मृषाभाषितं वादीः ॥ ४०

कोपमनार्योचितमिह
कथमपि विजहाहि कोपिनां लोके ।
दुष्कर्मणि प्रवृत्तिः
दुर्गतिरपि निश्चितैव नन्वेषाम् ॥ ४१

आत्मन इव सर्वेषां
लोकानामस्ति खल्वसुख्वाशा ।
तन्न हिनस्ति यदन्यं
धर्मः परमोऽहि तल्लोके ॥ ४२

सहनं किल सकलानां
    सद्गुणविभूषणं किमपि ।
जगति सहिष्णोः पुंसः
    श्रेयस्संपत्स्यते समस्तमपि ॥ ४३

नह्यपहरेत्परस्वं
    सकृदपहृतवन्तमप्यहो सर्वे ।
धिक्धिक् चोरो ह्ययमिति
    निन्दन्तो न प्रवेशयन्त्यन्तः ॥ ४४

कुब्जान्धखञ्जमूको-
    न्मत्तेष्वायात्सु वीक्ष्य तान् मार्गे ।
न हसेत्परन्तु तादृश-
    जनमुपचारैः प्रमोदयेन्मधुरैः ॥ ४५

गृहमुपयातं कं वा
    कुत उपयातोऽसि रे बहिर्याहि ।
इति दर्पतो न जल्पेत्
    सरसतरैः प्रीणयेद्वचनैः ॥ ४६

इति सूक्तिजालमखिलं
    बाले कलयाय वच्मि शीलानि ।
अन्यानि कानि चित्तव
    दृढमवगन्तव्यमेव सर्वमिदम् ॥ ४७

अनृतैर्व्याजैर्वत्से
    मा त्वं स्था यत्रकुत्रापि ।
मात्रा निर्दिष्टमखिलं
    झटितिविधेयं विधेहि सोल्लासम् ॥ ४८

विलिखामि पठाम्यहमपि
किमितः पुंसा समास्म्येव ।
इति गर्वमलभमाना
विनयविनम्रैव सर्वदा तिष्ठ ॥ ४९

कन्ये कपोलयुगळीं
भूषय हारिद्रचूर्णेन ।
धारय कुङ्कुममळिके
नान्या स्त्रीणामितोऽधिका भूषा ॥ ५०

वस्त्रं तदेव भूयात्
भूयादिदमेव भूषणं खलु मे ।
इति निर्बन्धं माकुरु
तृप्य वितीर्णेन येन केनापि ॥ ५१

परपुरुषाणामग्रे
मा त्वं स्था निस्त्रपा च कुत्रापि ।
मा भृशमहेतु च हसीः
मा स्म वदो निष्ठुरां कदाप्युक्तिम् ॥ ५२

गच्छन्ती पथि मा त्वं
धावीर्गर्जीरितस्ततो द्राक्षीः ।
मापि च खेलीर्बाले
नम्रमुखी याहि चायाहि ॥ ५३

बुद्धिमती विनयवती
कन्येयं ह्रीमती भाति ।
इति साधवो यथा त्वा-
मभिनन्देयुस्तथा त्वया स्थेयम् ॥ ५४

भोभो वत्सा एता
    मम हितभणितीः विबुध्य यद्येवम् ।
यूयं वर्तिष्यध्वे
    सुयशश्श्रेयश्च भूरि लप्स्यध्वे ॥ ५५

इद्यां विद्यां विनय-
    श्रियं सदाचारमायुरारोग्यम् ।
विभवान् वितीर्य भगवान्
    कृपयाऽपायात्सदा शिशून् पायात् ॥ ५६

इति महिसुरपुरसीता-
    रामकवीन्द्रेण बालबोधाय ।
ग्रथिता भगवत्कृपया
    जयतु चिरं सूक्तिमञ्जरी सेयम् ॥ ५७

मङ्गलमस्तु.

---

व्याख्यायादिति ऋषिमतमेवं श्रीशङ्करोऽप्यनुससार । एवमद्वैतं जगदखिलमपि व्याख्यातीति अस्य शास्त्रस्य मूलस्तम्भायमानोऽवस्थात्रयवाद एव निश्चप्रचं व्यनक्ति । अस्य च उत्तरत्र विस्तरः ॥

बाह्यप्रपञ्चः मानसप्रपञ्चश्च प्रतिक्षणं भिद्यमानो दृश्यत इति निर्विवादमेतत् । मनोभावानां, प्रकृतिस्थितीनां, सामाजिकपरिस्थितीनां च अनुक्षणाविर्भावतिरोभावौ कां चन गतिं सूचयन्ति । बाह्यमान्तरं च सर्वं भ्रामयत्किमिदं ? किंलक्षणं ? इतरदर्शनेष्विव अद्वैतेऽपि अस्य मूलप्रश्नस्य उत्तरं अन्विष्यत एव ॥

(अनुवर्तते)

एच्. योगनरसिंहार्यः.

## मधन्यवादमस्माभिरङ्गीकृता एताः
## विनिमयरूपाः पत्रिकाः

---

१. रिसर्च् इन्स्टिट्यूट् आनलस्, पूना.
२. जर्नल् आफ् ओरियंटल् रिसर्च्, मदरासु.
३. प्रबुद्धकर्णाटकं, बेंगळूरु.
४. मिथिक् सोसैटि जर्नल्, बेंगळूरु.
५. यूनिवर्सिटि यूनियन् म्यगसीन, मैसूरु.
६. एम्. टि. बि. आर्ट्स्कालेज्म्यागजीन, सूरत.
७. ओरियंटल कालेजु म्यागसीन्, लाहोर.
८. सद्बोधचन्द्रिके, आनन्दवन.
९. श्री शारदा, शृंगेरि.
१०. कादम्बरीसंग्रह, चामराजनगर.
११. सनातनधर्मसंजिविनी. मैसूरु.
१२. उद्यानपत्रिका, तिरुवाडि.
१३. सुप्रभातम्. काशी.
१४. संस्कृत साहित्यपरिषत्पत्रिका. कल्कत्ता.
१५. वै. एं. ऐं. ए. पत्रिका. मल्लेश्वरं, बेंगळूरु.
१६. आन्ध्रसाहित्य परिषदः पत्रिका, काकिनाड.
१७. विश्वकर्णाटक, बेंगळूरु.
१८. तायनाडु, बेङ्गळूरु.
१९. मञ्जुभाषिणी, काञ्चीपुरम्.
२०. सूर्योदयः, काशी.
२१. उद्योतः, लाहोर.
२२. स्वधर्मप्रकाशिनी, मदरासु.
२३. जयकर्नाटक, धारवाड.
२४. वेदसन्देश, मङ्गळूरु.
२५. कर्मवीर, धारवाड.

स्माभिरङ्गीकृता एताः

## विनिमयरूपाः पत्रिकाः

---

१. रिसर्च इन्स्टिट्यूट आनल्स, पूना.
२. जर्नल् आफ ओरियंटल् रिसर्च. मद्रास्.
३. प्रबुद्धकर्णाटक, बेंगळूरु.
४. मिथिक् सोसैटि जर्नल, बेंगळूरु.
५. यूनिवर्सिटि यूनियन म्यगसीन, मैसूरु.
६. एम्. टि. बि. आर्ट्स्कालेज़म्यागज़ीन, सूरत.
७. ओरियंटल् कालेजु म्यागसीन, लाहोर.
८. सद्बोधचन्द्रिके, आनन्दवन.
९. श्री शारदा, शृंगेरि.
१०. कादम्बरीसंग्रह, चामराजनगर.
११. सनातनधर्मसंजिविनी. मैसूरु.
१२. उद्यानपत्रिका, तिरुवादि.
१३. सुप्रभातम्, काञ्ची.
१४. संस्कृत साहित्यपरिषत्पत्रिका. कल्कत्ता.
१५. वै. एं. ए. ए. पत्रिका. मल्लेश्वरं, बेंगळूरु
१६. आन्ध्रसाहित्य परिषदः पत्रिका, काकिनाड.
१७. विश्वकर्णाटक, बेंगळूरु.
१८. तायिनाडु, बेङ्गळूरु.
१९. मञ्जुभाषिणी, काञ्चीपुरम्.
२०. सूर्योदयः, काशी.
२१. उद्योतः, लाहोर.
२२. स्वधर्मप्रकाशिनी, मद्रास्.
२३. जयकर्नाटक, धारवाड.
२४. वेदसन्देश, मङ्गळूरु.
२५. कर्मवीर, धारवाड.